# GÍTAGOVINDA

BY

JAYADÉVA GOSWÁMI

WITH THE COMMENTARY

OF

BÁLABODHINÍ

EDITED BY

BÉCHA´ RÁMA VASÁKA

AT THE REQUEST OF

BÁBU BHUVANA CHANDRA VASÁKA.



CALCUTTA:

PRINTED & PUBLISHED BY

BÁBU BHUVANA CHANDRA VASÁKA.

At the sanbàda Jnànaratnàkara Press.

No. 8 Nimtollah Ghat Street.

1872.

# गीतगोविन्दम्।



## प्रथमः सर्गः।

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय।
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहःकेलयः॥१

श्रीचैतन्यकृपासीधुकणोन्मत्तेन केनचित्।
टीका संरच्यते गीतगोविन्दस्य समासतः॥
स्वयं बोद्धुमभिप्रायं जयदेवमहामतेः।
क्रमेणोपक्रमादेषा यतते बालबोधिनी॥
तत्र व्याकरणादीनां ग्रन्थबाहुल्यभीतितः।
विवृतिर्न कृता सा तु ज्ञेया ग्रन्थान्तरे बुधैः॥
बोद्धव्यो बालबोधिन्यां शब्दार्थः शब्दवेदिभिः।
भावार्थदीपिकायाञ्च भावो भावार्थलोलुपैः॥

अथ श्रीराधामाधवयोर्विजनकेलिवर्णनमयं श्रीगीतगोविन्दाख्यं प्रबन्धमाचिन्वानस्तत्र च तयोः सर्वोत्तमतां निश्चिन्वानः श्रीमान् जयदेवनामा कविराजस्तमालवनतमःपुञ्जकुञ्जसदनाद्बहिस्थितयोस्तयोस्तत्र प्रवेशाय गदितश्रीराधिकासखीवचनमनुस्मरंस्तदेव मङ्गलमाचरति। तद्वर्णनमयत्वात् प्रबन्धोऽयं मङ्गलरूप इति विज्ञापयति मेघैरिति। श्रीराधामाधवयोरहःकेलयो जयन्ति सर्वेषां परमव्योमनाथादीनां तत्प्रेयसीनाञ्च केलिभ्य उत्कर्षेण वर्त्तन्ते। श्रीकृष्णस्य स्वयं भगवत्त्वेन सर्वावतारेभ्यः श्रैष्ठ्यात् श्रीराधिकायाः सर्वलक्ष्मी-

मयीत्वेनास्याः सर्व्वप्रेयसीभ्यः श्रैष्ठ्याच्च। यथोक्तं श्रीसूतेन एते चांश-कलाः पुंसः कृष्णस्तु भगवान् स्वयमिति। तथाच वृहद्गौतमीये देवी कृष्णमयी प्रोक्ता राधिका परदेवता। सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनीपरेति। तएवामुं गमोद्यमं विघ्नान् विधूय सम्पादयन्त्वि-त्यर्थः। भगवतः स्वरूपशक्ति विशेषत्वात् केलीनां जयनकर्तृत्वं युक्तमेव उत्कर्षप्रतिपत्तिरेव जयतेरर्थः सर्वोत्कर्षप्रतिपत्तावकर्म्मकः। यथा जयति रघुवंशतिलकइति। कजयन्ति यमुनाकूले किं लक्षीकृत्य प्रत्यध्व-कुञ्जद्रुमं कुञ्जेनोपलक्षितोद्रुमः कुञ्जद्रुमः पथ्वनः कुञ्जद्रुमोऽध्वकुञ्ज-द्रुमस्तं लक्षीकृत्य तत्रेत्यर्थः। कीदृशयोः इत्थमनेन प्रकारेण नन्दयतीति नन्दः सचासौ निदेशश्चेति सः श्रीराधायाः सखीवचनं तस्माज्जलि-तयोः। निदेशमेवाह हेराधे! यतोऽसौ नक्तं पूर्वरात्रौ त्वां विहाया-न्याभिः कृतन्टत्याद्यपराधतया भीरुर्भीतः त्वत्कृत बहुनायिकावल्लभ-तारोपणाशङ्की तस्मात् त्वमेवेमं त्वन्निमित्तानुभूतमन्मथव्यथं श्रीकृष्णं गृहं मञ्जुतरेत्यादि वक्ष्यमाणं केलिसदनं प्रापय पुरःकेलिसदनम् अनु-सरन्ती एतस्य केलिसदनप्राप्तावनुकूला भवेति। अथवा त्वमेवेमं गृहं प्रापय गृहस्थं कुरु त्वयैवायं गृहिणीमानस्त्वित्यर्थः एवकारेण षड्वधा-रणेनास्यैव भार्य्या भवितुं रुक्मिण्यर्हति नापरेति कुण्डिनवासिजनानां रुक्मिणीदेवीं प्रति आशीर्वचनं त्वमेवास्य भार्य्या भवेत्याशीः सूचिता। न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते इत्युक्तेः। ज्योत्स्नावत्या-मस्यां जनाकुलायां मया कथमसौ प्रवेशनीयस्तत्र समयानुकूल्यमाह मेघैरम्बरमाकाशं मेदुरं स्निग्धम् आच्छादितमित्यर्थः अस्य प्रियामिलने छादभूतमेघावृतश्चन्द्रइत्यर्थः। वनभुवस्तमालद्रुमैः श्यामाः निविडा-न्धकारैरलंक्षिता अतोऽत्र न कापि प्रतिबन्धकशङ्केत्यर्थः। एतदनन्तर-मेवैतत् लीलावसरे सखीयं वक्ष्यति अक्ष्णोर्निक्षिपदञ्जनमित्यादिना ततोविशन् वनं चन्द्रज्योत्स्ना यावद्विभाव्यते। तमः प्रविष्टमालक्ष्य ततोनिववृतुः स्त्रियइति श्रीशुकोक्तिरियम्। जयत्यर्थे न नमस्कार आक्षिप्यतइतिकाव्यप्रकाशोक्तेर्नमस्क्रियाच सूचिता। श्रीराधामाधव-योरहः केलयोऽत्र प्रतिपाद्याः। अतोवस्तुनिर्देशोऽपि एवं पद्यत्रय-

प्रतिपादनैर्महाकाव्यत्वमुक्तं यथोक्तं काव्यादर्शे सर्गबन्धोमहाकाव्यमुच्यते तस्य लक्षणम् । आशीर्नमस्क्रियावस्तुनिर्देशोवापि तन्मुखमिति । राधामाधवयोरित्यनेन तयोरन्योन्याव्यभिचारिविद्योतमानता सूचिता । यथोक्तम् ऋक्परिशिष्टे राधया माधवो देवो माधवेनैव राधिका विराजते जनेष्विति राधामाधवयोरित्यत्र द्वन्द्वसमासेन तयोः परस्परविद्योतमानता व्यज्यते शृङ्गाररसप्राधान्यं हि काव्यं, शृङ्गाररसे स्त्रियाएव प्राधान्यमिति राधायाः प्राङ्निपातः ॥ १ ॥

वाग्देवताचरितचित्रितचित्तसद्मा
पद्मावतीचरणचारणचक्रवर्त्ती ।
श्रीवासुदेवरतिकेलिकथासमेत
मेतं करोति जयदेवकविः प्रबन्धम् ॥२॥

एवमाद्यैकपद्यसूचितकेलिस्फुरणोपस्थापितानन्दपूरप्लावितान्तःकरणतया उद्यतकाव्यद्वयेनाधुनिकभक्तजनानुग्रहपरवशः कविरेतत् केलि व्यक्तीकरणाय प्रबन्धमनुसन्दधदात्मनस्तत्सामर्थ्यं समर्थयन्नाह वाग्देवतेति । जयं सर्वोत्कर्षं श्रीकृष्णं देवयति द्योतयति स्वभक्त्या प्रकाशयतीति जयदेवः अतः सएव कविः तद्गुणवर्णनकर्त्ता एवं श्रीगीतगोविन्दाख्यं प्रबन्धं प्रकर्षेण बध्यते श्रोतॄणां हृदयमस्मिन्निति प्रबन्धस्तं करोति प्रकाशयति । श्रोतृहृदयबन्धनशक्तिरस्य कथं स्यादतआह श्रीरत्र राधा वसुवंशेन दीव्यतीति वसुदेवः श्रीनन्दः द्रोणोवसूनां प्रवरइतश्रुतेः । तस्यापत्यं वासुदेवः श्रीकृष्णस्तयोर्या रतिकेलिकथास्ताभिः सहितं तल्लीलाविशेषवर्णनरूपमित्यर्थः । एवञ्चेत् तत् कथमयं कर्त्तुं शक्नुयादतआह वाचां वक्तव्यत्वेनोपस्थितानां तत्केलिमयीनां देवता वक्ता प्रवर्त्तकश्च श्रीकृष्णस्तच्चरितेन चित्ररूपेण लिखितं चित्तरूपं सद्म मनोगृहं यस्य सः । इन्द्रियशक्तिर्दैवताधीना निजेष्टदैवतं वाग्देवतात्वेन निरूपितम् अत एतत् कर्त्तृत्वं तस्यैव पर्य्यवस्येत् । तथाचेत्तस्य फलकरूपत्वेन चरितस्य चित्रविशेषत्वेन निरूपणात् यथा चित्रविशेषः फलकमधिष्ठाय स्वयमेव प्रकाशयति तथात्रापीत्यर्थः ।

एवं वाचां मनसश्च वृत्तेर्माधवपरतोक्ता एतावतापि कथं तच्छक्तिरतः कायिकवृत्तेः श्रीराधिकापरत्वमाह पद्मं विद्यते करे यस्याः सा पद्मावती श्रीराधा शरावत्यादीनामित्यादियहणात् दीर्घः तस्याश्चरणयोर्निमित्तभूतयोरेव चारणचक्रवर्त्ती नर्त्तकश्रेष्ठः इत्यादिना सदा तदाराधनपर इत्यर्थः। अनेन तत्प्रधानोपासना आत्मनो दर्शिता ॥ २ ॥

यदि हरिस्मरणे सरसं मनो
यदि विलासकलासु कुतूहलम्।
मधुरकोमलकान्तपदावलीं
शृणु तदा जयदेवसरस्वतीम् ॥ ३ ॥

एवमात्मनस्तद्‌योग्यतामापाद्य सिद्धेऽपि प्रतिज्ञातार्थे हृदयविनोदकत्वाभावात् कदाचिन्मन्दजनाः श्रद्धां न दध्युरित्यधिकारिणोऽपि निश्चिन्वन्नाह यदीति। भो भक्तजन! यदि हरिस्मरणे श्रीकृष्णानुचिन्तने मनः सरसं स्निग्धं, यदि च विलासस्य रासकुञ्जादिलीलायाः कलासु वैदग्ध्याचारुचेष्टासु कुतूहलं कौतुकमस्ति, तदा जयदेवकवेः सरस्वतीं वाणीं शृणु तत्त्वन्नास्ति चेन्न। अनेनाधिकारिवैरल्यं सूचितं कीदृशीमसौ यस्या एवाधिकारिणोपि निश्चिनोषीत्याह शृङ्गाररसस्य प्राधान्यात् मधुरा झटित्यर्थावगतेः कोमला गेयत्वात् कमनीया पदावली पदश्रेणी यस्यां ताम् एभिः पद्यैः सम्बन्धाभिधेयप्रयोजनाधिकारिणोऽपि शृङ्गाररसप्राधान्या दर्शिताः श्रीराधामाधवयोरहः केलयोऽत्राभिधेयाः, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः तत्केलीनामनुमोदनजनितानन्दानुभवः प्रयोजनम्। एतद्रसभावितान्तःकरणोऽधिकारी ॥ ३ ॥

वाचःपल्लवयत्युमापतिधरः सन्दर्भशुद्धिं गिरां
जानीते जयदेव एव शरणः श्लाघ्यो दुरूहद्रुते।

शृङ्गारोत्तरसत्प्रमेयवचनैराचार्य्यगोवर्द्धनः
स्पर्द्धीकोपि न विश्रुतःश्रुतिधरो धोयी कविः
क्ष्मापतिः ॥ ४ ॥

अथैतद्दावेशेनैवान्यत्र प्रकृतवर्णनप्रायतामालोक्यात्मनः प्रौढिमाविष्कुर्वन्नाह वाच इति । उमापतिधरनामा कविः वाचः पल्लवयति विस्तारयति मात्रं न काव्यगुणयुक्ताः करोति, पल्लवग्राहिताटोषोऽस्य यदुक्तं पल्लवग्राहि पाण्डित्यं क्रेयक्रीतञ्च मैथुनम् । भोजनञ्च पराधीनं तिस्रः पुंसां विड़म्बना इति । शरणनामा कविः दुरूहस्य दुर्बोधस्य काव्यस्य द्रुते शीघ्ररचने श्लाघ्यःनतु प्रसादादिगुणयुक्ते, शृङ्गारएवोत्तरः श्रेष्ठोयत्र तस्य सत्प्रमेयस्य सामान्यनायकनायिकाप्रायवर्णनस्य रचनैराचार्य्यगोवर्द्धनः स्पर्द्धावान् नतु रसान्तरवर्णनैः । धोयीनामा कविराजः श्रुतिधरः प्रसिद्धः श्रवणमात्रेण ग्रन्थादिधारी नतु स्वयं कवितया । गिरां सन्दर्भः गुणालङ्कारादिग्रथनविशेषस्तस्यशुद्धिं शोधनप्रकारं जयदेव एव जानाति केवल भगवद्गुणवर्णनरूपम् । तद्वाग्विसर्गोजनताघविप्लव इत्युक्तेः । अथवा दैन्योक्तिरियं यथा गिरां सन्दर्भशुद्धिं किंजयदेवोजानीते न जानीतएव यतउमापतिधरोवाचः पल्लववन्तनयति । शरणोदुरूहद्रुते श्लाघ्यः गोवर्द्धनाचार्य्यस्यतुल्यस्तु नास्त्येव धोयी तु कवीनां राजा श्रुतिधरश्च यद्यपि स्वयं दैन्येनैवोक्तं तथापि सरस्वती पूर्व्वार्धमेव प्रमाणयति ॥ ४ ॥

मालवगौड़रागेण गीयते

प्रलयपयोधिजले धृतवानसि वेदं
विहितवहित्रचरित्रमखेदम् ।
केशव धृतमीनशरीर
जय जगदीश हरे ॥ ५ ॥ ध्रुवम् ॥

अथ केलीनां सर्व्वोत्कर्षं प्रतिपादनायादौ सर्व्वत्र साश्रयस्य श्रीकृष्णस्य मत्स्याद्यवतारित्वेन सर्व्वरसाधिष्ठातृत्वमखिलनायकशिरोरत्नतां प्रतिपादयन् सर्व्वोत्कर्षाविर्भावनं प्रार्थयते प्रलयेत्यादिना वसन्ते वासन्तीत्यन्तेन। गीतस्यास्य मालवरागो रूपकताल इत्याह मालवेति तत्र लक्षणं यथा नितम्बिनीचुम्बितवक्त्रबिम्बः शुकद्युतिः कुण्डलवान् प्रमत्तः। सङ्गीतशालां प्रविशन् प्रदोषे मालाधरो मालवरागराजः। विरामान्तद्रुतं द्वन्द्वं रूपकः स्यादिलक्षण इति। केशवेति केशिदैत्यनिसूदन श्रीकृष्ण जय सर्व्वोत्कर्षमाविष्कुरु तदाविष्करणसामर्थ्ये हेतुः। जगदीश जगतां प्राकृताप्राकृतानामीशनशील तथाविधत्वेपि कारुण्यमाह हरे हरति भक्तानामशेषक्लेशमिति हरिः हे तथाविध तत्क्लेशहरत्वं तदेकप्रयोजनमात्रावतारत्वेन प्रतिपादयति तत्रादौ मीनरूपेण नौकारूपष्टविव्याकर्षणेनाह प्रलयेति। धृतं स्वेच्छयाविष्कृतं मत्स्याकारं शरीरं येन हे तथाविध जय जगदीश हरे इत्येवं ध्रुवपदं प्रतिपदमनुवर्त्तमानत्वात् यथोक्तं ध्रुवत्वाच्च ध्रुवः पश्चादाभोगस्यान्तिमोमत इति विश्वः। तदाकर्षण प्रकारमाह प्रलयकालीना ये समुद्रास्तेषामेकीभूते जले निमग्नं वेदम् अखेदं यथास्यात्तथा धृतवानसि। तत्प्रकारमाह कृतं नौकायाश्चरित्रं यत्र तद् इत्यपि क्रियाविशेषणं वेदरक्षणपूर्व्वकं सत्यव्रतं प्रलयक्लेशादपादित्यर्थः अनेनैव मीनस्य वीभत्सरसाधिष्ठातृत्वं ज्ञापितम् ॥ ५ ॥

क्षितिरतिविपुलतरे तव तिष्ठति पृष्ठे
धरणिधरणकिणचक्रगरिष्ठे।
केशव धृतकच्छपरूप
जय जगदीश हरे ॥६॥

न केवलं तदाकर्षणमात्रेण अपितु तद्धारणपूर्व्वकं स्थित्यापीत्याह क्षितिरिति। सर्व्वत्र पूर्व्ववन्मुखबन्धनयोजना। हे धृतकच्छपरूप! तव पृष्ठे क्षितिस्तिष्ठति। ननु पञ्चाशत्कोटियोजनविस्तीर्णा कथं मम पृष्ठे स्थितेत्याह अतिशयेन विपुलतरे पृथिव्यपेक्षयाप्यधिकविस्तीर्णे पुनः

कीदृशे धरण्या धरणे यत् किणचक्रं शुष्कव्रणसमूहस्तेन कठिने, अनेन कर्मठस्याद्भुतरसाधिष्ठातृत्वं ज्ञापितं किणःशुष्कव्रणेऽपिचेति वि-श्वप्रकाशः ॥ ६ ॥

वसति दशनशिखरे धरणी तव लग्ना
शशिनि कलङ्ककलेव निमग्ना ।
केशव धृतशूकररूप
जय जगदीश हरे ॥७॥

नचैतावता तद्वहनपूर्व्वोद्गमनेमाप्याह हे धृतशूकररूप ! तव द-न्ताग्रे धरणी लोकधारणत्वादपि लग्ना वसति कुत्र केव शशिनि चन्द्रे निमग्ना कलङ्कस्य कलेव अत्र दशनस्य बालचन्द्रेणोपमा धरण्या कल-ङ्कस्य कलया अतएव निमग्नशब्दस्योपादानम् अनेनैव वराहस्य भयान-करत्वाधिष्ठातृत्वं ज्ञापितम् ॥ ७ ॥

तव करकमलवरे नखमद्भुतशृङ्गं
दलितहिरण्यकशिपुतनुभृङ्गम् ।
केशव धृतनरहरिरूप
जय जगदीश हरे ॥८॥

नात्मनः क्लेशसहनमात्रेण परपीडायापीत्याह हे धृतनरहरि-रूप ! तव करकमलवरे नखमस्ति कीदृशम् अद्भुतमाश्चर्य्यं शृङ्गम् अग्र-भागोयस्य तादृशम् अद्भुतत्वमेवाह विदारितो हिरण्यकशिपोर्दैत्यस्य तनुरूपो भृङ्गो येन तत्, अन्यद्धि कमलाग्रं भृङ्गेण दल्यते इदन्तु कम-लाग्रं भृङ्गं व्यदारीदित्यद्भुतशृङ्गत्वं नखस्येत्यर्थः विषाणनखयोश्चाग्रे शृङ्गं स्यादिति विश्वः। अनेनैव नृसिंहस्य वत्सलरसाधिष्ठातृत्वं ज्ञापितम् ॥ ८ ॥

छलयसि विक्रमणे बलिमद्भुतवामन
पदनखनीरजनितजनपावन ।

केशव धृतवामनरूप
जय जगदीश हरे ॥९॥

अपिच कपटदैन्यादिनाप्याह हे धृतवामनरूप ! हे अद्भुतवामनरूप ! विक्रमणे पादाक्रमणनिमित्तमुपादाय बलिं वञ्चयसि पदनखनीरेण जनितं जनानां पावित्र्यं येन हे तादृश ! जय अनेनैव वामनस्य सख्यरसाधिष्ठातृत्वं ज्ञापितम् ॥ ९ ॥

क्षत्रियरुधिरमये जगदपगतपापं
स्नपयसि पयसि शमितभवतापम् ।
केशव धृतभृगुपतिरूप
जय जगदीश हरे ॥१०॥

न सकृन्मात्रपरपीड़या असकृत्तत्पीड़यापीत्याह हे भृगुपतिरूप ! क्षत्रियाणां यद्रुधिरं तन्मये पयसि जलरूपे कुरुक्षेत्रस्यतीर्थे जगत् प्राणिमात्रम् अपगतपापं यथास्यात्तथा स्नपयसि, कीदृशं तेन स्नपनेन शमितः संसारतापोयस्य तादृशं तत्स्नानेन पापक्षयात् ज्ञानोत्पत्त्या भवतापशान्तिरित्यर्थः । अनेनैव परशुरामस्य रौद्ररसाधिष्ठातृत्वं विज्ञापितम् ॥ १० ॥

वितरसि दिक्षु रणे दिक्पतिकमनीयं
दशमुखमौलिबलिं रमणीयम् ।
केशव धृतरामशरीर
जय जगदीश हरे ॥ ११॥

न चैतावता प्रियावियोगादि दुःखसहनेनाप्याह हे धृतरघुपतिरूप ! संग्रामे दशसु दिक्षु रावणस्य ये मस्तकास्तएव उपहारः तं ददासि, किमिति अचेतनासु दिक्षु बलिदानं दिशां पतीनामिन्द्रादीनामभीष्टं तैरपि कथं स बलिः काङ्क्ष्यते रमणीयं जगदुद्वेजकस्य राव-

यस्य मौक्तिकविक्षेपैः रुचिजनक एवेत्यर्थः अनेनेव श्रीरामस्य करुणरसाधिष्ठातृत्वं ज्ञापितम् ॥ ११ ॥

वहसि वपुषि विशदे वसनं जलदाभं
हलहतिभीतिमिलितयमुनाभम् ।
केशव धृतहलधररूप
जय जगदीश हरे ॥१२॥

नैतावन्मात्रं स्वप्रेयसीश्रमरूपक्लेशापनोदनाय आत्मभक्तयमुनाकर्षणेनाप्याह हे धृतहलधररूप ! त्वं शुभ्रे वपुषि जलवन्नीलं वसनं धारयसि तत्रोत्प्रेक्षते हलेन हतिर्हननं तद्भीत्या मिलिता या यमुना तद्दाभा यस्य तत् अनेनेव हलधरस्य हास्यरसाधिष्ठातृत्वं विज्ञापितम् ॥ १२ ॥

निन्दसि यज्ञविधेरहह श्रुतिजातं
सदयहृदयदर्शितपशुघातम् ।
केशव धृतबुद्धशरीर
जय जगदीश हरे ॥१३॥

किञ्च निजाज्ञारूपवेदविरुद्धवाद प्रवर्त्तनेनाप्याह त्वं यज्ञविधेर्यज्ञविधायकवेदवाक्यसमूहं निन्दसीति अहहेत्यद्भुतं स्वयं वेदान् प्रकाश्य स्वयमेव निन्दसि इत्यद्भुतत्वम् । तत्प्रकारमाह दर्शितः पशूनां घातोयत्र तद्यथाख्यात्तया, कथं निन्दसीत्याह पशुषु सदयं हृदयं यस्य हे तादृश ! अहिंसा परमोधर्म्म इत्यादिदैत्य मोहनाय पशुषु दयासहित इत्यर्थः अहेः पयः पोषइव दैत्यानां यज्ञकरणमनुचितमिति तन्मोहनं युक्तमित्यर्थः । अनेनैव बुद्धस्य शान्तरसाधिष्ठातृत्वं ज्ञापितम् ॥ १३ ॥

म्लेच्छनिवहनिधने कलयसि करवालं
धूमकेतुमिव किमपि करालम् ।

केशव धृतकल्किशरीर
जय जगदीश हरे ॥ १४ ॥

बुद्धधर्म्मं विना निर्द्दयतया प्राणिवधेनापि इत्याह हे धृतकल्किशरीर! त्वं म्लेच्छ समूहस्य नाशनिमित्तं करवालं खड्गं कलयसि, कलिहल्योः कामधेनुत्वात् धारयसि, कीदृशं किमपि अनिर्व्वचनीयमतिशयमित्यर्थः करालं भयङ्करं, कमिव धूमकेतुमिव तन्नाम औत्पातिको योग्रहविशेषस्तमिव अनेनैव कल्किनोवीररसाधिष्ठातृत्वं विज्ञापितम् ॥ १४ ॥

श्रीजयदेवकवेरिदमुदितमुदारं
शृणु शुभदं सुखदं भवसारम्।
केशव धृतदशविधरूप
जय जगदीश हरे ॥ १५ ॥

एवं प्रत्येकाङ्गरसाधिष्ठातृत्वपुरस्कारेण निवेद्य समुदिताङ्गरसाधिष्ठातृत्वपुरस्कारेण निवेदयति हे धृतदशविधरूप श्रीकृष्ण! जय श्रीजयदेवकवेर्म्मेकमुदितं शृणु कीदृशं शुभदं जगन्मङ्गलप्रदं यतोभवस्य जन्मनः त्वदवताराणां सारं रहस्यं यत्र तत्, अतएवोदारं परमं महत् सुखदं परमानन्दप्रदं जन्मगुह्यमिदमिति श्रीशुकोक्तेः॥ १५॥

वेदानुद्धरते जगन्ति वहते भूगोलमुद्बिभ्रते
दैत्यान् दारयते बलिं छलयते क्षत्रक्षयं कुर्व्वते।
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं
नमः ॥ १६ ॥

अथ वर्त्तमानशब्दप्रत्ययैरवताराणां तत्तल्लीलानाञ्च नित्यत्वप्रतिपादेन श्रीकृष्णस्य नित्यं तत्तदवतारलीलत्वं वक्तुं उक्तां गीतार्थमेकश्लो-

केन निबध्नन्नाह वेदानिति। दशावतारान् कुर्व्वते श्रीकृष्णाय सर्व्वाकर्षकानन्दाय तुभ्यं नमोऽस्तु दशाकृतित्वं प्रकटयन्नाह मीनरूपेण वेदोद्धारणं कुर्व्वते, कूर्म्मरूपेण भुवनानि वहते, वराहरूपेण पृथिवीमण्डलं ऊर्द्धं नयते, नृसिंहरूपेण हिरण्यकशिपुं विदारयते, वामनरूपेण वलिं छलयते छलेनात्मसात् कुर्व्वते, परशुरामरूपेण दुष्टक्षत्रियाणां नाशं कुर्व्वते, श्रीरामरूपेण रावणं जयते, वलभद्ररूपेण दुष्टदमनाय हलं धारयते, बुद्धरूपेण कारुण्यं विस्तारयते, कल्किरूपेण म्लेच्छान्नाशयते। अनेनैव सर्व्वावतारित्वेन श्रीकृष्णस्य सर्व्वरसाश्रयत्वं सिद्धं मल्लानामशनिर्न्नृणामित्युक्तेः। अतएव एकादशभिः पदैः समाप्तिः। बुद्धो नारायणोपेन्द्रौ नृसिंहोनन्दनन्दनः। बलः कूर्म्मस्तथा कल्की राघवो भार्गवः कविः। मीनरूपेषु कथिताः क्रमात् द्वादश देवता इतिभक्तिरसामृतसिन्धौ रसाधिष्ठातारः॥ १२॥

गुज्जरीरागनिःसारतालाभ्यां गीयते।

## श्रितकमलाकुचमण्डल धृतकुण्डल। ध्रुवं॥
## कलितललितवनमाल जय जय देव हरे॥१॥

अथ तेनैव सर्व्वोपास्यत्वेपि ध्येयविशेषत्वं वदन् श्रीकृष्णस्य सर्व्वनायकशिरोरत्नता प्रतिपादनाय धीरोदात्तादि चतुर्विधनायकगुणसमन्वयेन सर्व्वोत्कर्षाविर्भावनं प्रार्थयते श्रितकलेत्यादिभिः। गीतस्यास्य गुज्जरीरागः निःसारतालः। तल्लक्षणं यथा श्यामा सुकेशी मलयद्रुमाणां मृदुल्लसत्पल्लवतल्पयाता। श्रुतेः स्वराणां दधती विभागं तन्त्रीमुखाद्दक्षिणगुज्जरीयम्। द्रुतद्वन्द्वाल्लघुद्वन्द्वं निसारः स्यादिति स्मृतिः। तत्र परम व्योमनाथत्वेन धीरललितत्वमाह श्रितम् आश्रितं लक्ष्म्याः कुचमण्डलं येन हे तादृश! अनेन विदग्धत्वपरिहासविशारदत्वप्रेयसीवशत्वनिश्चिन्त्यत्वानि सूचितानि अतएव धृते कुण्डले येन हे तादृश! धृता सुन्दरी वनमाला येन हे तादृश? अनेन विशेषणद्वयेन नवतारुण्यत्वं तेनैव वेशविन्याससिद्धेः हे देव जय हे हरे सर्व्वोत्कर्षमाविष्कुरु इति सर्व्वत्र योजना

निष्पाद्य विशेषेण जय देव हरे इति ध्रुवपदम्। विदग्धोऽनवतारुण्यः परिहासविशारदः। निश्चिन्तोधीरललितः स्यात् प्रायः प्रेयसी वशइत्यपि तत्र धीरललितलक्षणम्॥ १७॥

दिनमणिमण्डलमण्डन भवखण्डन।
मुनिजनमानसहंस जय जय देव हरे॥ १८॥

अथ सूर्य्यमण्डलान्तर्ध्येयत्वेन धीरशान्ततामाह दिनमणिमण्डल इति। सूर्य्यमण्डलं पूज्यत्वात् मण्डयति भूषयतीति हे तथाविध! जय इति लोभसहनत्वम् अतएव मननशीलानां मानसहंस मानसे सरसि हंसइव सदा तच्चित्तस्थित इत्यर्थः अनेन शमप्रकृतित्व-विनयादिगुणोपेतत्वे अतस्तत् संसारं नाशयतीति से तादृश इति विवेचकत्वम्। धीरशान्तलक्षणञ्च तत्रैव शमप्रकृतिकः लोभसहनश्च विवेचकः। विनयादिगुणोपेतोधीरशान्त उदीर्य्यतइति॥ १८॥

कालियविषधरगञ्जन जनरञ्जन।
यदुकुलनलिनदिनेश जय जय देव हरे॥ १९॥

निजोपास्यत्वेनापि ध्येयविशेषत्वेनापि धीरोद्धतत्वमाह द्वाभ्यां कालिय नामा विषधरः सर्पः तस्य गञ्जन, जनान् व्रजजनान् रञ्जयतीति विना नन्द्यावर्तं जनाइतिवत् हे जनरञ्जन! जय, किमिति तान् रञ्जयामीत्याह यदुकुलमेव नलिनं तस्य दिनेशः सूर्यइति, यादवानां हितार्थाय धृतोगिरिवरो मयेत्यादि वचनात् गोपाएव यादवाः अतो गोपकुलप्रकाशकइत्यर्थः। कालियेति मात्स-र्य्यवत्त्वं जनरञ्जनेति यदुकुलेति चाहंकारित्वम् अहंतया ममतया च जनरञ्जनादिसिद्धेः। धारोद्धतलक्षणञ्च। मात्सर्य्यवानहङ्कारी मायावी रोषणश्चलः। विकत्थनश्च विद्वद्भिर्धीरोद्धत उदाहृत इति॥ १९॥

मधुमुरनरकविनाशन गरुडासन।
सुरकुलकेलिनिदान जय जय देव हरे॥ २०॥

तस्यैव द्वारकाद्युपास्यत्वेनाह मधुमुरनरकान् विनाशयतीति हे तथाविध! जय गरुड़ः पक्षिराजः सएवासनं यस्य हेतादृश! सुरकुलकेलीनां निदानमादिकारणं हे तादृश! एतैर्मायावित्वादि चतुष्कम् ॥ २० ॥

**अमलकमलदललोचन भवमोचन ।**
**त्रिभुवनभवननिधान जय जय देव हरे ॥२१॥**

सर्वतापशमनपूर्वकसर्वभीष्टप्रदतया देवसहायरूपेण धीरोदात्ततामाह द्वाभ्याम् । निर्म्मलकमलदले इव तापशमके लोचने यस्य हे तादृश! जयइति । तादृश लोचनोपलक्षितगम्भीरत्वं कथं तापशमकमत आह भवं संसारं मोचयतीति हे तादृश! करुणत्वं तदपि कुतः त्रिभुवनानां भवनस्योद्भवस्य निधानो निधिमिव कारणं जनकमित्यर्थः इति विनयित्वम् । धीरोदात्तलक्षणं यथा गम्भीरो विनयी क्षन्ता करुणः सुदृढ़व्रतः । अकत्थनोगूढ़गर्व्वो धीरोदात्तः सुसत्त्ववदिति ॥ २१ ॥

**जनकसुताकृतभूषण जितदूषण ।**
**समरशमितदशकण्ठ जय जय देव हरे ॥२२॥**

जनकसुतया कृतं भूषणं यस्य हे तादृश! जय इतिसुदृढ़व्रतत्वं, जितोदूषणः तन्नामा राक्षसोयेन हे तादृशइति अकत्थनत्वं, संग्रामे शमितोरावणोयेन हे तादृश! इति क्षन्तृत्वगूढगर्व्वत्वसुसत्त्ववत्त्वानि ॥ २२ ॥

**अभिनवजलधरसुन्दर धृतमन्दर ।**
**श्रीमुखचन्द्रचकोर जय जय देव हरे ॥ २३ ॥**

अस्मिन् धीरललितमुख्यता प्रतिपादनाय अजितरूपत्वेन संघुटितमिव पुनस्तमेवाह अभिनवेति । हे नवीनघनवत् सुन्दर! जय धृतोमन्दरस्तन्नामा गिरिर्येन हे तादृश! क्षीराब्धिमन्थनदृत्यधिगन्तव्यम् आभ्यां नवतारुण्यं तदधिगमस्य कुतः श्रियः समुद्रमथनेना-

विभूताया मुखचन्द्रे चकोर इव सलालस इति प्रेयसीवशत्वम् एषु केचित् गुणाः अंशेन, श्रीकृष्णे सर्व एव पूर्णतया विराजन्ते इति सर्वोत्कर्षत्वम् अतोऽत्रापि नवपदैः समाप्तिः ॥ २३ ॥

तव चरणे प्रणता वयमिति भावय ।
कुरु कुशलं प्रणतेषु जय जय देव हरे ॥ २४॥

अथ स्वसहिते तत्प्रोत्तवर्गेषु प्रसादं प्रार्थयते हे श्रीकृष्ण! तव चरणे वयं प्रणता इति भावय जानीहि इति ज्ञात्वा किं कर्त्तव्यं प्रणतेषु अस्मासु कुशलं त्वल्लीलानुभव सामर्थ्यं कुरु देहि, त्वल्लीलानुभवस्य त्वत्प्रसादं विनानुपपत्तेः परमानन्दरूपत्वादित्यर्थः ॥ २४ ॥

श्रीजयदेवकवेरिदं कुरुते मुदम् ।
मङ्गलमुज्ज्वलगीति जय जय देव हरे ॥ २५ ॥

अत्र स्वानुभवं प्रमाणयति इदं जयदेवकवेर्मम मुदं करोति इदमिति किं मङ्गलं मङ्गलाचरणमात्रं कीदृशम् उज्ज्वलस्य शृङ्गाररसस्य गीतिर्गानं यत्र तत् । एवञ्चेत् किमुत केलीनामित्यर्थः ॥ २५ ॥

पद्मापयोधरतटीपरिरम्भलग्न-
काश्मीरमुद्रितमुरो मधुसूदनस्य ।
व्यक्तानुरागमिव खेलदनङ्गखेद-
स्वेदाम्बुपूरमनुपूरयतु प्रियं वः ॥ २६ ॥

एवं प्रार्थ्य श्रोतॄन् प्रति आशिषमातनोति पद्मेति । मधुसूदनस्य वक्ष्यमाणरीत्या श्रीकृष्णस्य उरः वो युष्माकं वाञ्छितम् अनुनिरन्तरं पूरयतु कीदृशं पद्मा श्रीराधा तस्याः पयोधरप्रान्तभागपरिरम्भाल्लग्नकुङ्कुमेनाङ्कितं मुद्रां प्रापितमित्यर्थः तत्रान्या मा प्रविशतु इत्यभिप्रायेणैवेति भावः अतएव खेलता अनङ्गेन यः खेदस्तेन स्वेदाम्बुनां पूरः प्रवाहो । यत्र तत् अत्रोत्प्रेक्ष्यते व्यक्तः प्रकटी-

भूतोऽनुरागो यत्र तदिव अन्तरुच्छलितः प्रियानुरागो वहिः कामुमी-रकरूपेण उरस्याविर्भूत इत्यर्थः ॥ २६ ॥

वसन्ते वासन्तीकुसुमसुकुमारैरवयवै
र्भ्रमन्तीं कान्तारे बहुविहितकृष्णानुसरणाम्।
अमन्दं कन्दर्पज्वरजनितचिन्ताकुलतया
वलद्बाधां राधां सरसमिदमूचे सहचरी ॥२७॥

तदेवं मङ्गलसङ्गमेनैव माधवोत्कर्षमाविष्कृत्य उपक्रमोक्तश्रीराधा-माधवरहः केलिवर्णनोत्कलिकोच्छलितचित्तः कविर्दक्षिणधृष्टशठना-यकगुणसमन्वयैः श्रीराधिकायां श्रीकृष्णस्यानुकूलनायकता प्रतिपा-दनार्थं सूचीकटाहन्यायेन श्रीशुकोक्तिवत्साधारण्येनान्याभिलषितविह-रणं समासेन समापयितुकामस्तेनैव श्रीराधिकायाः सर्वोत्कर्षमा-विष्कर्तुं तत्र तस्या अष्टनायिकावस्थां वर्णयन् सम्भोगपोषकवि-प्रलम्भशृङ्गाररस वर्णनाय प्रथमं विरहोत्कण्ठितावस्थामाह वसन्त-इति । उत्कण्ठिता लक्षणं यथा उद्दाममन्मथमहाज्वरवेपमानां रोमा-ञ्चकञ्चुकितमङ्गलं वहन्तीम् । सम्मोहवेपथुघनोत्पुलकाकुलाङ्गीमुत्क-ण्ठितां वदति तां भरतः कवीन्द्र इति । वसन्तसमये तत्सहचारिणी सखा श्रीराधिकां सरसं यथास्यात्तथा इदं वक्ष्यमाणमूचे श्रीकृ-ष्णाभिप्रायं ज्ञापयितुमिति ज्ञेयम् । कीदृशीं माधवीपुष्पतोपि कोम-लैरङ्गैरुपलक्षितां युक्तामित्यर्थः तादृश्यपि दुर्गमे वर्त्मनि भ्रमतीं ननु कान्तारे कथं भ्रमति बहु यथास्यात्तथा कृतं कृष्णानुसरणं यया ताम् अमन्दं यथास्यात्तथा कन्दर्पेण कामेन तत्प्राप्त्यभिलाषेण योज्वर-स्तेन जनिता या चिन्ता नानोपायविचारस्तदाकुलतया वलन्ती पीड़ा-यस्यां ताम् अत्र तां विहाय अन्याभिलषितविहरणेनेदं गम्यते शार-दीयराकारात्रौ प्रथमरासमहोत्सवे श्रीराधिकाया असमानोर्द्धरूपगुण-विलासाननुभूय तस्यां सर्वविजयि स्वानुरागं सफलं मन्यमानस्य श्रीकृ-ष्णस्य कुत्रचित् कथञ्चित् तत्सादृश्यं भवेन्नवेति स्थूनालिखनन्यायेन तद्वि-विक्तायां चिरमत्यन्ततायां दिनकतिपयानन्तरं लीलेयमिति । अथवा

तद्विवित्सायामुद्भूतायां तदिच्छानुसारिण्या योगमायया कंसानुज्ञातात्क्रूरागमने कृते तदर्थे वानेकनारीसंकुलां श्रीमथुरां असौ गतवान् गत्वाच तत्र नारी प्रभृतिषु व्रजसुन्दरीणामपि रूपगुणादिकमभय भूयः श्रीद्वारवतीं प्रति तदाज्ञया जगाम तत्र नरेन्द्रकन्या विवाह्यापि ततोनरकासुराहृतगन्धर्व्वयक्षनागकन्यानां शताधिकषोडशसहस्राणि विवाह्य तासु तास्वपि तासां सादृश्यं न लब्धं ततोदन्तवक्त्रवधानन्तरं पुनर्व्रजागमने जाते सत्येव लीलेयमिति। केशिनयनमिति हरिः कुवलयापीड़ेन सार्द्धमित्यादिवक्ष्यमाणत्वात् प्रोषितभर्तृकाङ्गीकाराच्च ॥ २७ ॥

वसन्तरागयतितालाभ्यां गीयते।

**ललितलवङ्गलतापरिशीलनकोमलमलयसमीरे**
**मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे**
**विहरति हरिरिह सरसवसन्ते**
**नृत्यति युवतिजनेन समं सखि विरहिजनस्य**
**दुरन्ते ॥२८॥ ध्रुवम् ॥**

किम् ऊचे इत्यपेक्षायामाह ललितेत्यादिना। गीतस्यास्य वसन्तरागो यतितालः। तद्यथा शिखण्डिवर्होच्चयबद्धचूडः पुष्णन् पिकं चूतनवाङ्कुरेण। भ्रमन् मुदा वाममनङ्ग मूर्त्तिर्मत्तो मतङ्गोहि वसन्तरागः। लघुद्वन्द्वात् द्रुतद्वन्द्वं यतिः स्यात् त्रिपुटान्तरा इति, हे सखि! इह वृन्दावनविपिने रसः शृङ्गारस्तत्सहिते तदुद्दीपक इत्यर्थः वसन्तसमये हरिर्विहरति, केन प्रकारेण युवतिजनेन समं नृत्यति, कीदृशे विरहिजनस्य दुरन्ते दुःखेन गमयितुं शक्ये इत्युभयोर्विशेषणं हरिर्मनोहरणशीलः अतोऽस्य विरहोदुःसहः सरसोपि वसन्तोऽयं विरहिनीनां दुःखदत्वात् दुरन्त इत्यर्थः तदभिप्रायज्ञानात् भावीर्ष्यादिक निवारणाय इदमुक्तं वसन्तस्यैव विशेषणानिवृन्दावनस्यापि सम्भवन्ति। कीदृशे ललिताया लवङ्गलतायाः परिशीलनेनालिङ्गनेन

कोमलो मलयाचलसम्बन्धी समीरोयत्र तस्मिन् लतानारी संस्पर्शात् कोमलत्वेन मान्द्यं पुष्पसम्बन्धात् सौगन्ध्यं यमुनाजलसम्बन्धाच्छैत्यम् अचेतनापि लता कान्तमन्तरेण चेत् स्थातुं न शक्नोति तर्हि सचेतनानां का कथेत्यर्थः। तथा मधुकराणां समूहेन करम्बितानां मिश्रितानां कोकिलानां कूजितं यत्र स कुञ्जकुटीरोयत्र तस्मिन्। धीलनसमालिङ्गने स्यात् करम्बितन्तु खचितमिति विश्वः ॥ २८ ॥

उन्मदमदनमनोरथपथिकवधूजनितविलापे
अलिकुलसंकुलकुसुमसमूहनिराकुलवकुल-
कलापे ॥२९॥

विरहिजनस्य दुरन्ततामाह पुनः कीदृशे उन्नतोमदोयस्य तेन मदनेन मनोरथोयेषां तेषां पथिकवधूजनानां जनितो विलापो येन तस्मिन् अतः अलिकुलेन संकुलेन व्याप्तेन कुसुमसमूहेन निःशेषेणाकुलोवकुलकलापो यत्र तस्मिन्। संकुलं वाच्यवद्व्याप्ते इति विश्वः ॥२९॥

मृगमदसौरभरभसवसम्वदनवदलमालतमाले।
युवजनहृदयविदारणमनसिजनखरुचिकिंशुक
जाले ॥ ३० ॥

पुनः कीदृशे कस्तूरिकायाः सुगन्धायायोरभसोऽतिशयस्तस्यायत्ता नवदलानां श्रेणी येषु ते तमाला यत्र तस्मिन्, तथा युवजनानां हृदयविदारणाय मनसिजस्य ये नखास्तद्वद्रुचिर्येषां तेषां समूहोयत्र तस्मिन्, स्त्रीषु किञ्चित् सदयोपि युवसुतिनिर्दय इति भावः ॥ ३० ॥

मदनमहीपतिकनकदण्डरुचिकेशरकुसुम-
विकाशे। मिलितशिलीमुखपाटलिपटल-
कृतस्मरतूणविलासे ॥ ३१ ॥

पुनः कीदृशे मदनमहीपतेः सुवर्णच्छत्रस्येव रुचिर्यस्य नागकेश

रकुसुमस्य विकाशोयत्र तस्मिन्, किञ्च मिलिताः शिलीमुखा यस्मिन् तेन पाटलिपुष्पसमूहेन कृतः कामतूणीरस्य विलासोयत्र तस्मिन्, पाटलिपुष्पस्य तूणाकारत्वात् शिलीमुखशब्दस्य श्लिष्टार्थत्वात् साम्यम् ॥ २१ ॥

विगलितलज्जितजगदवलोकनतरुणकरुण-
कृतहासे। विरहिनिकृन्तनकुन्तमुखाकृति-
केतकिदन्तुरिताशे ॥ ३२ ॥

पुनः कीदृशे विगलितं लज्जितं लज्जा यस्य तस्य जगतः प्राणिमात्रस्यावलोकनेन तरुणैः करुणवृक्षैः पुष्पव्याजेन कृतोहासोयत्र तस्मिन् यूनामेव कामाभिज्ञतया हास्योपयुक्तेः श्लिष्टार्थतरुणशब्दोपादानां तथा विरहिणां निकृन्तनाय छेदनाय कुन्तस्यास्त्रविशेषस्य मुखमिवाकृतिर्यासां ताभिः केतकीभिः दन्तुरिता उन्नतदन्ताः कृता आशा दिशो यत्र तस्मिन् अनेनातिनिर्दयता सूचिता। प्रासस्तु कुन्त इत्यमरः ॥ ३२ ॥

माधविकापरिमलललिते नवमालिकयातिसु-
गन्धौ। मुनिमनसामपि मोहनकारिणि तरु-
णाकारणबन्धौ ॥ ३३ ॥

पुनः कीदृशे माधविकायाः सौरभेन ललिते, तथा नवमालिकापुष्पैरतिसौरभे, मुनिमनसामपि मोहजनके, कामिनां का वार्त्तेत्यर्थः। ईदृशोपि यः समाधियुक्तमुनीनां मनस्युद्वेजकः स कथं चिरं तिष्ठति तरुणानां निरुपाधिकमित्रे तदाशीर्वादेन चिरं तिष्ठतीत्यर्थः एकशेषतरुण शब्दः तरुण्यश्च तरुणाश्च तेषामिति ॥ ३३ ॥

स्फुरदतिमुक्तलतापरिरम्भणमुकुलितपुलकित-
चूते। वृन्दावनविपिने परिसरपरिगत(य)मुना
जलपूते ॥ ३४ ॥

पुनः कीदृशे स्फुरन्त्या माधवीलतायाः परिरम्भणेन पुलकित-इव मुकुलितो रसालतरुर्यत्र तस्मिन् यथा कश्चित् वराङ्गनालिङ्गितः पुलकितोभवतीत्यभिप्रायः। कीदृशे वृन्दावनविपिने समीपव्याप्तयमुनाजलेन पूते पवित्रे शोभितइत्यर्थः। पर्य्यन्तभूः परिसर इत्यमरः॥ ३४॥

**श्रीजयदेवभणितमिदमुदयति हरिचरणस्मृति-सारम्। सरसवसन्तसमयवनवर्णनमनुगत-मदनविकारम्॥ ३५॥**

अथ गीतार्थमुपसंहरन् स्वभणितेरुत्कर्षमाह श्रीजयदेवेत्यादि। श्रीजयदेवस्येदं भणितम् उदयति विराजते कुतः हरिचरणयोः स्मरणेन सारं सर्व्वश्रेष्ठं तत्रापि रसः शृङ्गारस्तत्पोषकवसन्तसमयसम्बन्धिनो वनस्य वर्णनं यत्र अतएव सन्निधानवर्त्तिन्याः शृण्वन्त्यस्तस्या मदनविकारो यत्र तत्॥ ३५॥

**दरविदलितमल्लीवल्लिचञ्चत्पराग-**
**प्रकटितपटवासैर्वासयन् काननानि।**
**इह हि दहति चेतः केतकीगन्धबन्धुः**
**प्रसरदसमबाणप्राणवद्गन्धवाहः॥ ३६॥**

पुनरुद्दीपनाय अनिलमेव विशेषतो वर्णयति दरेति। इह वसन्तसमये वायुश्चेतो दहति विरहिनामित्यर्थादधिगन्तव्यम्। ननु किमपराद्धमेतैस्तस्य यदेषां चेतो दहति तत्राह प्रतिदिशं सञ्चरतः कामस्य प्राणतुल्यः कामसखइति यावत् कामोऽत्र नृपत्वेन निरूपितः तत्सखा वायुः सख्युराज्ञापालनं विरहिष्वनालोच्य तच्चेतोदहतीत्यर्थः। किं कुर्वन् ईषद्विकशितायाः मल्लिकायाः सकाशादुद्गच्छद्भिः पुष्पपरागैरेव प्रकटितपटवासैः सुगन्धचूर्णैः काननानि सुरभीणि कुर्वन्, कीदृशः केतकीपुष्पगन्धस्य सहचारी॥ ३६॥

अद्योत्सङ्गवसद्भुजङ्गकवलक्लेशादिवेशाचलं
प्रालेयं प्लवनेच्छयानुसरति श्रीखण्डशैलानिलः।
किञ्च स्निग्धरसालमौलिमुकुलान्यालोक्य हर्षो-
दयादुन्मीलन्ति कुहूः कुहूरिति कलोत्तालाः
पिकानां गिरः ॥ ३७ ॥

पुनरतिशयेनोल्लेख्यते अद्येति। मलयाचलसम्बन्धी वायुः अद्य महेशाचलं हिमालयम् अनुसरति किमर्थं हिमावगाहनेच्छया, कुतस्तदिच्छा तत्राह मलयस्य क्रोड़े वसतां सर्पाणां कवलेन यः क्लेशस्तस्मादिवोल्लेख्ये चन्दनतरुकोटरस्थाहिकवलसन्तप्तो हिमस्नानेच्छया हिमालयं यातीत्यर्थः। न केवलमिदमेव दुःसहं अन्यदपीत्याह किञ्चेति। स्निग्धाम्रवृक्षाणामग्रभागे मुकुलान्यालोक्य स्थितानामिति हर्षोदयात् कुहूः कुहूरिति पिकानां गिरउद्गच्छन्ति कीदृश्यः मधुरास्फुटध्वनिना उद्भटाः ॥ ३७ ॥

उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीडत्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः
॥ ३८ ॥

चिरविरहिनः प्रियामिलनं विना अत्र दिवसनिर्यापनमतिदुर्घटमित्याह उन्मीलदिति। प्रियाविरहितैरमी वसन्तसम्बन्धिनो वासरा अतिकष्टेन निर्वाह्यन्ते कीदृशाः उन्मीलन्ति यानि मधूनि गन्धाश्च तेषु लुब्धैर्मधुपैः कम्पितेषु आम्रमुकुलेषु क्रीड़तां कोकिलानां सूक्ष्मकलेर्ये कोलाहलास्तैरुद्भृतः कर्णज्वरो येषु ते। कैर्नीयन्ते ध्याने प्राणसमायाश्चिन्तने अवधानेन क्षणं प्राप्तायाः प्राणसमायाः समागमरसादुत्पन्नैरुल्लासैः ॥ ३८ ॥

अनेकनारीपरिरम्भसम्भ्रम-
स्फुरन्मनोहारिविलासलालसम् ।
मुरारिमारादुपदर्शयन्त्यसौ
सखी समक्षं पुनराह राधिकाम् ॥३९॥

एवं तद्वर्णनदर्शनादिभिः श्रीराधिकामुदीप्रभावां विधाय किञ्चित् सविधं नीत्वा सखी श्रीकृष्णस्याभिप्रायं तस्यै साक्षात् दर्शयन्ती आह अनेकेति । असौ सखी राधिकां पुनराह किं कुर्व्वती मुरारिं समीपे प्रत्यक्षमुप अधिकं दर्शयन्ती कथमनभीष्टमन्याङ्गनारमणं दर्शयति तत्राह अनेकेति। अनेक नारीणां परिरम्भसंभ्रमेण स्फुरत् स्वाविर्भवत् सुमनोहारिषु राधिकाविलासेषु लालसा औत्सुक्यं यस्य तम् । एत-द्विलासस्य प्रत्यक्षत्वात् तस्या विलासस्यैव स्फुरणं युक्तमित्यर्थः ॥३९॥

रामकिरीरागयतितालाभ्यां गीयते ।

चन्दनचर्च्चितनीलकलेवरपीतवसनवनमाली
केलिचलन्मणिकुण्डलमण्डितगण्डयुगस्मितशाली
हरिरिहमुग्धबधूनिकरे
विलासिनि विलसति केलिपरे ॥४०॥ ध्रुवम् ॥

श्लोकोक्तमर्थं गीतेन वर्णयन्नाह चन्दनेत्यादि । गीतस्यास्य रामकिरीरागः यतितालः यथा स्वर्णप्रभा भास्वरभूषणा च नीलं निचोलं वपुषा वहन्ती। कान्ते पदोपान्तमधिश्रितेऽपि मानोन्नता रामकिरीयमिष्टा इति । तालस्य लक्षणं प्रागुक्तम् । हेविलासिनि ! असमानोर्द्धविलासशीले इह वृन्दावने स्वाभिप्रायानभिज्ञे बधूसमूहे हरिर्विलसति तद्विलाससादृश्याभासं कामयते कीदृशे केलिषु श्रेष्ठेपि कृष्णस्य दाक्षिण्यचेष्टया तदनुरूपात्मभक्ते कीदृशोहरिः चन्दने-नानुलिप्ते नीलकलेवरे पीतवसनं वनमाला च विद्यते यस्य सच समर्पितानेकोपकरणानेकवर्णबधूनिकरे त्वद्दत्तचन्दनवनमालो त्वद्वर्ण-वसनभूषित एव विलसतीत्यर्थः । अतएव केलिषु चलद्भ्यां मणि-कुण्डलाभ्यां मण्डितेन गण्डयुगलेन स्मितेन च शोभमानः ॥ ४० ॥

पीनपयोधरभारभरेण हरिं परिरभ्य सरागम्।
गोपवधूरनुगायति काचिदुदञ्चितपञ्चमरागम्॥४१

काचिद्गोपवधूः निविडस्तनभारातिशयेन सरागं यथा स्यात्तथा हरिं परिरभ्य उन्नतः पञ्चमस्वरो यत्र तं रागं तमनुगायति त्वदनुरागेण सह वर्त्तमानं हरिमिति वा ॥ ४१ ॥

कापि विलासविलोलविलोचनखेलनजनित-
मनोजम्। ध्यायति मुग्धवधूरधिकं मधुसूदन-
वदनसरोजम् ॥ ४२॥

कापि गोपवधूर्मधुसूदनस्य वदनसरोजम् अधिकं यथा स्यात्तथा ध्यायति भृङ्गवद्रसविशेषान्वेषणपर इति श्लिष्टमधुसूदनपदोपन्यासः। कीदृशं विलासेन चञ्चलयोर्विलोचनयोः खेलनेन जनितस्त्रासो मनोजो येन त्वद्विलासस्फुर्त्त्युल्लसितमित्यर्थः ॥ ४२ ॥

कापि कपोलतले मिलिता लपितुं किमपि
श्रुतिमूले। चारु चुचुम्ब नितम्बवती दयितं
पुलकैरनुकूले ॥४३॥

कापिनितम्बवती किञ्चित् कथनव्याजेन श्रुतिमूले मिलिता सती कपोलतले दयितं चारु यथा स्यात्तथा चुचुम्ब कीदृशे पुलकैरनुकूले प्रियाविलाससूचके ॥ ४३ ॥

केलिकलाकुतुकेन च काचिदमुं यमुनाजलकूले।
मञ्जुलवञ्जुलकुञ्जगतं विचकर्ष करेण दुकूले॥४४॥

काचित् गोपाङ्गना केलिकलाकुतुकेन अमुं श्रीकृष्णं पीताम्बरे करेणाकृष्टवती कीदृशं यमुनायास्तटे वेतसीकुञ्जगतम् ॥ ४४ ॥

करतलतालतरलवलयावलिकलितकलस्वनवंशे।
रासरसे सहनृत्यपरा हरिणा युवतिः प्रशशंसे॥४५

रासरसे सह नृत्यपरा युवती हरिणा प्रशशंसे त्वदीय किञ्चित् साद्गुण्याभासमालोक्य स्तुत्यर्थः कीदृशे करतलताले सरलवलयावलिभिः मिलितः कलस्वनवंशो यत्र तस्मिन् करतलतालतरलध्वनियुतमुरलीनादसङ्कुल इत्यर्थः ॥ ४५ ॥

श्लिष्यति कामपि चुम्बति कामपि कामपि रमयति वामाम् । पश्यति सस्मितचारुपरामपरा-
मनुगच्छति रामाम् ॥४६॥

श्लिष्यतीत्यादिभिः साधारण्यमेव दर्शितं नत्वेकस्यां शृङ्गारारम्भ इत्यर्थः । स श्रीकृष्णः स्मितचारु यथा स्यात्तथा परां पश्यति अपरां वामां त्वन्नामग्रहणालापजकोपचलितामनुनयेन प्रसादयति ॥ ४६

श्रीजयदेवभणितमिदमद्भुतकेशवकेलिरहस्यम् ।
विपिनविनोदकलावलितं वितनोतु शुभानि यशस्यम् ॥४७॥

श्रीजयदेव कवेरिदं गीतं शुभानि विस्तारयतु कीदृशम् अद्भुतं केशवस्य केलौ रहस्यं वैदग्धी विशेषेण श्रीराधिकाविलासपरीक्षणरूपं यत्र तत्तथा वृन्दावन विहारसौष्ठवयुक्तं यशःप्रदञ्च ॥ ४७ ॥

विश्वेषामनुरञ्जनेन जनयन्नानन्दमिन्दीवरश्रेणीश्यामलकोमलैरुपनयन्नङ्गैरनङ्गोत्सवम् ।
स्वच्छन्दं व्रजसुन्दरीभिरभितः प्रत्यङ्गमालिङ्गितः
शृङ्गारः सखि मूर्त्तिमानिव मधौ मुग्धोहरिः क्रीडति ॥४८॥

अथ गीतार्थं श्लोकेन विशदयन्ती तामुद्दीपयति विश्वेषामिति । हे सखि! मधौ वसन्ते मुग्धः त्वच्चिन्तया कर्त्तव्याकर्त्तव्यविचारशून्यो हरिः क्रीड़ति किं कुर्व्वन् विश्वेषां सर्व्वगोपाङ्गनाजनानाम् अनुरञ्जनेन तेषां स्वस्ववाञ्छितातिरिक्तरसदानात् प्रीणनेनानन्दं जन-

यन्, पुनः किं कुर्वन् अङ्गैरनङ्गोत्सवम् आधिक्येन प्रापयन्, कीदृशैः नीलकमलश्रेणीतोऽपि श्यामलकोमलैः इन्दीवरशब्देन शीतलत्वं श्रेणीपदेन नवनवायमानत्वं श्यामलपदेन सुन्दरत्वं कोमलशब्देन सुकुमारत्वञ्च सूचितं ननु द्विकोटिस्थोऽयं रसः नायकस्यानुरागे सत्यपि नायिकानुरागमन्तरेण कथं तदुदयः स्यादतआह व्रजसुन्दरीभिरालिङ्गितः स्वस्वप्रेमानुरूपालिङ्गनानुरञ्जनेनानुरञ्जितोऽनुरागं प्रापित इत्यर्थः। एतेनान्योन्यानुरञ्जनमात्रतात्पर्यकतया प्रेमपरिपाकोद्भतपूर्णरसाविर्भावेन प्राकृतरसस्तिरस्कृत इतिसूचितम्। तर्हि संकोचापत्तिः स्यात् नैव वाच्यं स्वच्छन्दं यथा स्यात्तथा कालदेशक्रियाणाम् असंकोचादित्यर्थः यथापि तस्य सर्वाङ्गता नस्यात् अभितः सर्वैरङ्गैरित्यर्थः तथा प्यङ्गानां दिङ्मात्रता स्यान्न प्रत्यङ्गमिति एकैकाङ्गस्य यथोचितक्रियेत्यर्थः। नन्वेकेनानेकानां समाधानं कथं स्यात्तत्राह शृङ्गाररसो मूर्त्तिमान् इत्यहमुत्प्रेक्षे यतःसोऽप्येकएव विश्वमनुरञ्जयन्नानन्दयति॥ ४८॥

**रासोल्लासभरेण विभ्रमभृतामाभीरवामभ्रुवा-**
**मभ्यर्णे परिरभ्य निर्भरमुरःप्रेमान्धया राधया।**
**साधु त्वद्वदनं सुधामयमिति व्याहृत्य गीतस्तुति-**
**व्याजादुद्भटचुम्बितःस्मितमनोहारी हरिःपातुवः**

इति श्रीगीतगोविन्दे सामोददामोदरोनाम प्रथमः सर्गः।

अथ कविरपि वसन्तरासमनुवर्णयन् शारदीयरासकृतं सराधश्रीकृष्णविलासमनुस्मरन् तद्वर्णनरूपामाशिषं प्रयुङ्क्ते रासेति हरिर्वोयुष्मान् रक्षतु कीदृशः आभीरवामभ्रुवां गोपसुन्दरीणां समीपे श्रीराधया उद्भटं यथास्यात्तथा उरः परिरभ्य चुम्बितः लज्जाशीलायास्तत्र तत्सिद्धिः कथं तत्राह प्रेमवशादित्यर्थः किं कृत्वा त्वद्वदनं साधु रमणीयं सुधामयमिति निगद्य गीतस्तुतेर्व्याजं विधाय अतस्तद्वैदग्ध्यमालोक्य यत् स्मितं तेन तस्या मनोहरणशीलः कीदृशानां रासोल्लासभरेण विभ्रमभृताम् अतएव सगर्वेयं श्रीराधिकाविलासानुभवेन आसम्यङ्मोदेन सह वर्त्तमानो दामोदरोयत्र सः॥ ४९॥ इति श्रीगीतगोविन्दटीकायां प्रथमः सर्गः॥

# गीतगोविन्दम् ।

## द्वितीयः सर्गः ।

विहरति वने राधा साधारणप्रणये हरौ
विगलितनिजोत्कर्षादीर्ष्यावशेन गतान्यतः ।
क्वचिदपि लताकुञ्जे गुञ्जन्मधुव्रतमण्डली-
मुखरशिखरे लीना दीनाप्युवाच रहःसखीम् ॥ १

अथ सखीवचनं निशम्य स्वयमप्यनुभूय श्रीकृष्णस्य साधारणविहरणं विलोक्य ईर्षोदयात् तद्दर्शनमप्यसहमानोऽन्यतोगता सखीमुवाचेत्याह विहरतीति । क्वचिदपि लताकुञ्जे लीना श्रीराधा दीना सती सखीं प्रति रहोऽत्यन्तगोप्यमपि स्वानुभूतमुवाच, कीदृशी ईर्ष्यया अन्यत्रगता, ईर्ष्यापि कुतः तास्वपि सर्वासु समानः प्रणयोयस्य तथाभूते हरौ विहरति सति विगलितोनिजोत्कर्षः अहमेव असाधारणी प्रियेत्येवं रूपोयत्तस्मात् प्रणयतारतम्यात् विहारस्य साम्यव्यवहरणात् श्रीकृष्णस्य स्वभावान्यथात्वदर्शनाक्षमतया अन्यतोगतेत्यर्थः कीदृशे लताकुञ्जे गुञ्जन्मधुव्रतमण्डल्या मुखरोऽग्रभागोयस्य तादृशे ॥ १ ॥

गुञ्जरीरागयतितालाभ्यां गीयते ।

सञ्चरदधरसुधामधुरध्वनिमुखरितमोहन-
वंशं, वलितदृगञ्चलचञ्चलमौलिकपोलवि-
लोलवतंसम् । रासे हरिमिह विहितविलासं
स्मरति मनोमम कृतपरिहासम् ॥ २ ॥ध्रुवं॥

तदेवाह गीतस्यास्य गुञ्जरीरागःयतितालः । हे सखि ! मम मनः इह विहितविलासं हरिं तत्र यथोचितक्रियाभिः स्वविहरणशीलं

स्मरति पूर्व्वानुभूतमेव प्रमाणयति कीदृशं रासे शारदीये कृतः परिहासो येन तं पुनः कीदृशं हरिं सञ्चरन्ती अधरसुधा यत्र तेन मधुरध्वनिना वादितोमोहनवंशो येन तं तादृशवंशीध्वनिरयन्यत्र नास्तीत्यर्थः। सर्व्वत्रैवं योज्यम्। दृशोदृष्टेरञ्चलं दृगञ्चलं चक्षुःप्रान्तदेशः कटाक्षइति यावत् वलितेन इतस्ततः प्रचलता दृगञ्चलेन योऽसौ चञ्चलमौलिः शिरोभूषणं तेन कपोले विलोलौ वतंसौ कर्णभूषणे यस्य तम्॥ २॥

चन्द्रकचारुमयूरशिखण्डकमण्डलवलयित-
केशम्। प्रचुरपुरन्दरधनुरनुरञ्जितमेदुर-
मुदिरसुवेशम्॥ ३॥

पुनः कीदृशं चन्द्रकेण अर्द्धचन्द्राकारेण चारूणां मयूरपिच्छानां मण्डलेन वेष्टिताः केशा यस्य तम्। तदेवोत्प्रेक्षते बृहदिन्द्रधनुषा अनुरञ्जितश्चित्रितो यः स्निग्धोमेघस्तादृक् शोभनो वेशोयस्य तम्॥३॥

गोपकदम्बनितम्बवतीमुखचुम्बनलम्भितलोभं।
बन्धुजीवमधुराधरपल्लवमुल्लसितस्मितशोभं॥४॥

पुनः कीदृशं गोपजातिस्त्रीणां मुखचुम्बनेन लम्भितः प्रापितो लोभोयस्य तं मयीति शेषः तथा बन्धूकपुष्पवदरुणो मधुरश्च अधरपल्लवो यस्य तं तथा विकसितेन स्मितेन शोभा यस्य तम्॥ ४॥

विपुलपुलकभुजपल्लववलयितवल्लवयुवतिसहस्रं।
करचरणोरसि मणिगणभूषणकिरणविभिन्नत-
मिस्रम्॥ ५॥

इह रासे विहितविलासं हरिं कीदृशं विस्तीर्णः पुलकोययोस्ताभ्यां पल्लववत् कोमलाभ्यां भुजाभ्यां वलयवत् वेष्टितं वल्लवयुवतीनां सहस्रं येन तम् एकदानेकालिङ्गनान्नैकनिष्ठप्रेमेत्यर्थः। तथा करचरणोरसि स्थितानि मणिगणोपलक्षितानि यानि विभूषणानि तेषां किरणैर्नाशितमन्धकारं येन तम्॥ ५॥

जलदपटलचलदिन्दुविनिन्दकचन्दनतिलक-
ललाटम् । पीनपयोधरपरिसरमर्द्दननिर्द्दय-
हृदयकवाटम् ॥ ६ ॥

पुनः पूर्व्वानुभूतन्तु मेघसमूहेन वेष्टितेन्दोः शोभातिशायी चन्दनतिलको ललाटे यस्य तं तथा पीनपयोधरयोः पर्य्यन्तभागस्य परिमर्द्देन निर्दयं हृदयकवाटं यस्य तं दृढत्वविस्तीर्णत्वाभ्यामत्र हृदयस्य कवाटत्वेन निरूपणम् ॥ ६ ॥

मणिमयमकरमनोहरकुण्डलमण्डितगण्डमुदारं।
पीतवसनमनुगतमुनिमनुजसुरासुरवरपरि-
वारम् ॥ ७ ॥

पुनः कीदृशं मणिप्रचुराभ्यां मकराकाराभ्यां कुण्डलाभ्यां मण्डितौ गण्डौ यस्य तं यद्यप्येतदप्रस्तुतोपकारकवर्णनं तथापि विरहिण्याः गुणोत्कीर्त्तनत्वाद्भूषणम् अतएव उदारं तथा पीतं वसनं यस्य तं किञ्च अनुगतः सौन्दर्य्येणाकृष्टो मुन्यादीनां वरपरिवारः परिग्रहो येन तम् ॥ ७ ॥

विशदकदम्बतले मिलितं कलिकलुषभयं
शमयन्तम् । मामपि किमपि तरङ्गदनङ्गदृशा
मनसा रमयन्तम् ॥ ८ ॥

अत्युत्कण्ठायाः स्फुरितमाह विशदकदम्बतले मिलितं पुष्पितत्वाद्विशदत्वम् । प्रेमकलहोद्भुतक्लेशाद्यद्भयं तच्चाटुभिरपनयन्तं तथापि अनिर्वचनीयं यथा स्यात्तथा मामपि मामेव रमयन्तं कया तरङ्गइव आचरननङ्गो यत्र तया दृशा मनसा च मया सह रतिं ध्यायन्तमित्यर्थः पूर्व्वदृष्टिस्फूर्त्तिरियम् ॥ ८ ॥

श्रीजयदेवभणितमतिसुन्दरमोहनमधु-

रिपुरूपम् । हरिचरणस्मरणं प्रति संप्रति पुण्यवतामनुरूपम् ॥ ९ ॥

श्रीजयदेवभणितं पुण्यवतां भगवद्भक्तिविशेषवतां हरिचरणस्मरणं प्रति संप्रति इदानीमपि योग्यं तादृशभाग्यवत आस्वादनीयमिति भावः । कीदृशम् अतिशयेन सुन्दरं मोहनञ्च मधुरिपोरूपं यत्र तत् ॥ ९ ॥

गणयति गुणग्रामं भ्रामं भ्रमादपि नेहते
वहति च परितोषं दोषं विमुञ्चति दूरतः ।
युवतिषु वलत्तृष्णे कृष्णे विहारिणि मां विना
पुनरपि मनो वामं कामं करोति करोमि किं ॥ १० ॥

ननु श्रीकृष्णाख्यां विहायान्याभिश्चेद्विहरति तर्हि त्वं किमिति तं स्मरसीति योग्यं स्वाभिप्रायं परीक्षमाणां सखीं प्रत्याह गणयतीति । मम वामं सुन्दरं विदग्धमिति यावत् वैदग्ध्यञ्च वक्ष्यमाणमधुसूदनशब्दार्थे दर्शयितव्यम् । तादृशं मम मनः कृष्णे कामम्भिलाषं पुनरपि करोति अहं किं करोमि निजोत्कर्षानुभवानन्दोन्मादं ममायत्तं न भवतीत्यर्थः । कीदृशे श्रीकृष्णे पूर्वरीत्या मयि वलन्ती तृष्णा यस्य तस्मिन् तदर्थमेव युवतिषु मां विना विहारिणि अतएव तस्य गुणानां समूहं गणयति भ्रामं क्रोधं भ्रमादपि नेच्छति दोषं सखि साधारणाचरणं दूरतोविमुञ्चति परितोषञ्च वहति प्राप्नोति मनसोऽपि मानायत्तत्वमेवात्र गतिरिति ध्वनिः । वामोऽन्दे च शब्दादिपूरणे इति विश्वः ॥ १० ॥

मालवरागैकतालीतालाभ्यां गीयते ।

निभृतनिकुञ्जगृहं गतया निशि रहसि निलीय वसन्तं, चकितविलोकितसकलदिशा रतिरभसरसेन हसन्तम् । सखि हे केशि-

**मथनमुदारं, रमय मया सह मदनमनोरथ-**
**भावितया सविकारम् ॥ ११ ॥ ध्रुवं ।**

अभिलाषानेवाह निभृतेत्यादिभिः । अस्यापि मालवरागैकता-लीतालौ । द्रुतमेकं भवेद्यत्र सैकतालीति संज्ञितेति तालीलक्षणम् । अथोद्यदुत्कण्ठया क्षणमपि स्थातुमशक्नुवती सखीं प्रार्थयते हे सखि ! मया सह केशिमथनं श्रीकृष्णं रमय केशिमथनमिति प्रथममेव निज-भावावलम्बनभुजस्फूर्त्त्या भुजवीर्य्योद्बोधकनामनिर्द्देशः तत्र हेतु-माह मदनेन प्रेम्णा यो मनोरथः विविधसम्भोगाभिलाषः तेन युक्तया एतावतापि कथं तत्सिद्धिरित्यतआह सविकारं मयि मानसभावेन सहितम् अतएव उदारं मनोरथदातारम् एवमन्योन्यानुरागः कथितः अन्यथा रसाभासापत्तेः । यथोक्तम् अनुरागोऽनुरक्तायां रसावहइतिस्थितिः । अभावेत्वनुरागस्य रसाभासं जगुर्बुधाः इति॥ कीदृश्या मया निशि निभृतनिकुञ्जगृहं गतया निर्ज्जनार्थं निभृतमिति, कुञ्जस्य रम्यतार्थं गृहमिति च । कीदृशं तदलाभान्मम वैकल्यादि-दिदृक्षया रहसि निलीय वसन्तं संकुचितमात्मानं कृत्वा तिष्ठन्तं चकितं यथा स्यात्तथा श्रीकृष्णः कुत्र निलीयास्ते इति विलोकिताः सकला दिशो यया तया रतिरभसादुच्छलितरसेन मद्वैकल्यं समीक्ष्य हसन्तम् ॥ ११ ॥

**प्रथमसमागमलज्जितया पटु चाटुशतैर-**
**नुकूलम् । मृदुमधुरस्मितभाषितया शिथि-**
**लीकृतजघनदुकूलम् ॥ १२ ॥**

प्रथममिलनेन लज्जितया नित्यं नवनवानुभवात् तथोक्तं मम प्रसा-दनसमर्थानां विनयोक्तीनां शतैर्मामनुनयन्तं मृदुमधुरस्मितेन युक्तं भाषितं यस्याः तया स्वचाटुभिरपगतसलज्जवामतां मां स्मितादिभिः ज्ञात्वा शिथिलीकृतं जघनस्थं दुकूलं येन तम् । चाटु नाटीप्रियोक्तिः स्यादिति हारावली ॥ १२ ॥

**किशलयशयननिवेशितया चिरमुरसि**

ममैव शयानम् । कृतपरिरम्भनचुम्बनया
परिरभ्य कृताधरपानम् ॥ १३ ॥

पल्लवशय्यायां शायितया चिरकालं व्याप्य ममैवोरसि शयानं ततश्च कृते परिरम्भणचुम्बने यया तया परिरभ्य कृतम् अधरपानं येन तम् ॥ १३ ॥

अलसनिमीलितलोचनया पुलकावलिललित-
कपोलम् । श्रमजलसकलकलेवरया वर-
मदनमदादतिलोलम् ॥ १४ ॥

अलसेन निमीलिते लोचने यया तया पुलकावलिभिर्ललितं कपोलं यस्य तं श्रमजलं सकलकलेवरे यस्यास्तया वरमदनमदात् अति लोलं सतृष्णम् ॥ १४ ॥

कोकिलकलरवकूजितया जितमनसिज-
तन्त्रविचारम् । श्लथकुसुमाकुलकुन्तलया
नखलिखितघनस्तनभारम् ॥ १५ ॥

कोकिलस्य कलरवइव कूजितं यस्यास्तया जितोऽभिभूतः कामशास्त्रस्य विचारो येन तम् अतएव तच्छास्त्रोक्तक्रियापूर्व्वापरीभावस्य व्यतिक्रमो न शङ्कनीयः श्लथकुसुमैराकुलाः कुन्तला यस्या स्तया नखैरङ्कितो घनस्तनभारो येन तम् । तन्त्रं शास्त्रप्रधानयोरिति विश्वः ॥ १५ ॥

चरणरणितमणिनूपुरया परिपूरितसुर-
तवितानम् । मुखरविशृङ्खलमेखलया
सकचग्रहचुम्बनदानम् ॥ १६ ॥

चरणयो रणितौ मणियुक्तमञ्जीरौ यस्यास्तया अनेन लीलाविशेषः सूचितः संपूर्णतां नीतः सुरतस्य विलासोयेन तं पुर्वं मुखरा पश्चाद्वि-

शृङ्खला त्रुटितगुणा काञ्ची यस्यास्तया केशग्रहणेन सह चूम्बनदानं यस्य तम् ॥ १६ ॥

रतिसुखसमयरसालसया दरमुकुलित-
नयनसरोजम् । निःसहनिपतिततनुलतया
मधुसूदनमुदितमनोजम् ॥ १७ ॥

रतिः शृङ्गाररूपः तया यत् सुखं तस्य यः समयः कालस्तत्र यो रसस्तेन अलसो यस्यास्तया ईषन्मुकुलिते नयनसरोजे यस्य तम् अनेन द्वयोर्युगपदावेशेन रतेरवसानः सूचितः निःसहोऽसहनम् अवलत्वमिति यावत् निःसहेन निपतिता तनूलता यस्यास्तया मधुसूदनमिति श्लिष्टम् अनेन भृङ्गो यथा अन्यकुसुमावलीनां मधुक्रमेण स्वादयन् कमलिन्युत्कर्षमनुभूय तस्यामत्यासक्तो भवति तद्वत् अयमपीति स्वमनसो वैदग्ध्यमेव बोधितम् अतएव आविर्भूतो मनोजः कामो मय्यभिलाषी यस्य तम् ॥ १७ ॥

श्रीजयदेवभणितमिदमतिशयमधुरिपुनिधु-
वनशीलम् । सुखमुत्कण्ठितगोपवधूकथितं
वितनोतु सलीलम् ॥ १८ ॥

इदं श्रीजयदेवभणितं कर्तृ सुखं वितनोतु कीदृशम् उत्कण्ठिताया गोपवध्वाः श्रीराधिकायाः कथितं यत्र तत् तथा अतिशयेन मधुरिपोः सुरतक्रीड़ां शीलयति स्मारयतीति तत् लीलया सह वर्त्तमानम् । निधुवनं सुरतमित्यमरः ॥ १८ ॥

हस्तस्रस्तविलासवंशमनृजुभ्रूवल्लिमद्बल्लवी-
वृन्दोत्सारिदृगन्तवीक्षितमतिस्वेदार्द्रगण्डस्थ
लम् । मामुद्वीक्ष्य विलज्जितस्मितसुधामुग्धा-
ननं कानने, गोविन्दं व्रजसुन्दरीगणवृतं
पश्यामि हृष्यामि च ॥ १९ ॥

अथ पूर्व्वदृष्टगोपीमण्डलस्थश्रीकृष्णस्फूर्त्त्या स्वमनसोऽनुभूतं श्रीकृष्णाभिप्रायज्ञानं साक्षात् दर्शयन्ती साटोपमाह हस्तेति। हे सखि! अहं कानने गोविन्दं पश्यामि हृष्यामि च कीदृशं व्रजसुन्दरीगणावृतं ननु मुग्धासि त्वं यतस्त्वां विहायान्याङ्गनाभिः सह विहरन्तं हरिं पश्यसि दृष्ट्वा च हृष्यसि इत्याशङ्क्याह कुटिल भ्रूलतावतीनां वल्लवीनां द्वन्दोत्सारिणा निजभावोद्बोधकेन अपाङ्गेन वीक्षितमपि मामुद्वीक्ष्य उद्ग्रीविको भूत्वा विशेषेण दृष्ट्वा विलक्षितो विस्मयान्वितः स्मितसुधया मुग्धमाननं यस्य स च तं तद्वैशिष्ट्यानुभवात् विस्मयहर्षान्वितद्रूत्यर्थः अतएव महद्दर्शनावेशेन हस्तात् स्खलितो विलासवंशो यस्य तम्। अतएव अतिस्वेदेनार्द्रं गण्डस्थलं तस्य तम्॥ १९॥

दुरालोकस्तोकस्तवकनवकाशोकलतिका-
विकाशः कासारोपवनपवनोऽपि व्यथयति।
अपि भ्राम्यद्भृङ्गीरणितरमणीया न मुकुल-
प्रसूतिश्चूतानां सखि शिखरिणीयं सुखयति॥२०

एवमुक्त्वा तत्स्फूर्त्त्यपगमे पुनरत्यन्तार्त्तिभरेणाह दुरालोकेति। हे सखि! अस्मो गुच्छोयासां तासां मयैव संवर्द्धितानां नवकाशोकलतिकानां विकाशः दुःखेनालोक्यते किञ्च सरोवरस्य उपवनसम्बन्धी पवनोऽपि व्यथयति तथा भ्राम्यन्तीनां भृङ्गीनां रणितैः रमणीयापि प्रशस्ताग्रभागयुक्तापि चूतानां मुकुलप्रसूतिः न सुखयति, अशोकोपि शोकदायी, पवनोपि पीड़कः, रमणीयोप्युद्वेगकारीत्यहो विरहवैपरीत्यमित्यर्थः॥ २०॥

साकूतस्मितमाकुलाकुलगलद्धम्मिल्लमुल्लासित
भ्रूवल्लीकमलीकदर्शितभुजामूलार्द्धदृष्टस्तनम्।
गोपीनां निभृतं निरीक्ष्य गमिताकाङ्क्षश्चिरं

चिन्तयन्नन्तर्मुग्धमनोहरं हरतु वः क्लेशं नवः केशवः ॥ २१ ॥

इति श्रीगीतगोविन्दे अक्लेशकेशवो नाम द्वितीयः सर्गः ।

अथ कविरपि श्रीराधयोन्नीतं श्रीकृष्णाभिप्रायं व्यञ्जयन्नाशास्ते साकूतेति । श्रीराधिकोत्कर्षनिश्चयेन नवइव जातः केशवः वो युष्माकं क्लेशं हरतु, कीदृशः गोपानां निभृतं रहस्यं तद्भावप्रकाशनं निरीक्ष्य अतुल्य श्रीराधिकायाः सर्वोत्तमतां चिरमन्तर्विचारयन् निरस्ता अन्यनारीष्वाकाङ्क्षा यस्य सः अतः परा उत्तमाऽन्या नास्तीत्यर्थः गमिता तस्यां प्रापिता आकाङ्क्षा येन इति वा । भावप्रकाशकरूपाणि निभृतस्य विशेषणान्याह आकूतेन सह स्मितं यत्र तत् तथा आकुला-द्व्याकुलः अतिशिथिलः अतएव गलन् केशबन्धो यत्र तत् किञ्च उत्-क्षिप्तं भ्रूवल्लीकं यत्र तत् तथैव कर्णकण्डूयनादिच्छलेन दर्शितभुजा-मूलात् अर्द्धदृष्टस्तनोयत्र तत् अतएव मुग्धं मनोहरम् । अतः सर्गा-ऽयमक्लेशः गतः श्रीराधासम्बन्धिमनःसाधारण्याभासरूपः क्लेशोय-स्मात् स केशवो यत्रेति ॥ २१ ॥

इति श्रीगीतगोविन्दटीकायां द्वितीयः सर्गः ।



## तृतीयः सर्गः ।

कंसारिरपि संसारवासनाबद्धशृङ्खलाम् ।
राधामाधाय हृदये तत्याज व्रजसुन्दरीः ॥ १ ॥

एवं सर्गद्वयेन श्रीराधामाधवयोः प्रेमोत्कर्षं निरूप्य इदानीं श्रीरा-धिकोत्कण्ठावर्णनानन्तरं श्रीकृष्णोत्कण्ठामाह कंसारिरिति । यया

सा तस्मिन्नुत्कण्ठिता तया कंसारिरपि राधाम् आ सम्यक्प्रकारेण हृदये कृत्वा व्रजसुन्दरीस्तत्याज बहुवचनेन तत्त्यागस्य बलवत्प्रयोजनतया अस्य तस्यामतिगाढ़ानुरागोध्वनितः हृदये तद्धारणपूर्व्वक शारदीय रासान्तर्विस्फूर्त्त्या चलितइत्यर्थः कीदृशं पूर्व्वानुभूतस्मृत्युपस्थापितविषयस्पृहा वासना, सम्यक् सारभूतायाः प्राङ्निश्चिताया वासनया बन्धनाय स्थूणानिखनन्यायेन दृढ़ीकरणाय शृङ्खलां निगड़रूपां परमाश्रयमित्यर्थः । यथा कश्चिद्विवेकी पुरुषः तारतम्येन असारवस्तुनिश्चयात् तदेकनिष्ठस्तदन्यत् सर्वं त्यजति तथायमपि तास्त्याज इत्यभिप्रायः ॥ १ ॥

**इतस्ततस्तामनुसृत्य राधिकामनङ्गबाणव्रणखिन्नमानसः । कृतानुतापः स कलिन्दनन्दिनीतटान्तकुञ्जे विषसाद माधवः ॥ २ ॥**

तदनन्तरकृत्यमाह इतस्ततइति । न केवलं सैव माधवोपि राधानुरागभङ्गचिन्ताकुलो यमुनायास्तटप्रान्तकुञ्जे विषादं चकार, किं कृत्वा तत्तत्स्थाने तां क्षणमपि च विरहासहां श्रीराधिकामन्विष्य कीदृशः अहो तस्याः सर्व्वोत्तमतां जानतापि मन्दधिया मया शिरीषकुसुमे रज्जुताड़नेन परीक्षणमिव कथमेवं कृतमिति कृतः पश्चात्तापो येन स तत्र हेतुः अनङ्गबाणव्रणेन खिन्नं मानसं यस्य सः अनेन तत्प्रदर्शी दशा अख्याप्युक्ता ॥ २ ॥

गुञ्जरीरागयतितालाभ्यां गीयते ।

**मामियं चलिता विलोक्य वृतं वधूनिचयेन**
**सापराधतया मयापि न निवारितातिभयेन ।**
**हरिहरि हतादरतयागता सा कुपितेव॥३॥ध्रुवं॥**

अस्यापि गुञ्जरीरागयतितालौ । हरिहरीति खेदे हा कष्टं सा पूर्व्वानुभूतगुणा श्रीराधा यस्मिन् मया हतादरत्वं मत्वा कुपितेव गता इत्यहमुत्प्रेक्षे कुतोहतादरत्वमिति पश्चात्तापमाह मामियमि-

त्यादिभिः इयं श्रीराधिका वधूसमूहेन वृतं मां दूरतोविलोक्य चलिता अनेनान्योन्यावलोकनं जातमिति गम्यते कथं तदैव नानुनीता मया दृष्टापि सापराधतया तां विहाय अन्याभिर्विहाररूपया अस्यै कथं दर्शयामि सुखसित्यतिभयेन न निवारिता ॥ ३ ॥

किं करिष्यति किं वदिष्यति सा चिरं विरहेण।
किं धनेन जनेन किं मम जीवितेन गृहेण ॥४॥

ततः सा चिरं विरहेण कामवस्थां प्राप्य कमुपायं विधास्यति सखीं प्रति किं वा वदिष्यतीत्यहं न जाने, अतो मम धनेन गवां समूहेन किं, व्रजजनेन किं, जीवितेन किं, गृहेण वा किं, तां विनैव तत्सर्वम् अकिञ्चित्करमित्यर्थः ॥ ४ ॥

चिन्तयामि तदाननं कुटिलभ्रु कोपभरेण।
शोणपद्ममिवोपरि भ्रमताकुलं भ्रमरेण ॥ ५ ॥

अहं तदाननमेव ध्यानेन पश्यामि, कीदृशं रोषभरेण कुटिला भ्रूर्यत्र तादृशं, तेनैव लोहितमित्यर्थः वाक्यार्थोपमामाह उपरि भ्रमता भ्रमरेण व्याप्तमरुणपद्ममिव ॥ ५ ॥

तामहं हृदि सङ्गतामनिशं भृशं रमयामि।
किं वनेऽनुसरामि तामिह किं वृथा विलपामि
॥ ६ ॥

अथ तत्स्फूर्त्त्याह अहं तां हृदि सङ्गतामपि पुरः प्राप्तां निरन्तरमत्यर्थं रमयामि किमर्थं वा वनेऽनुसरामि, तामुद्दिश्य किम्बा वृथा विलपामि, न करकलितरत्नं मृग्यते नीरमध्यइत्यभिप्रायः ॥ ६ ॥

तन्वि खिन्नमसूयया हृदयं तवाकलयामि।
तन्न वेद्मि कुतो गतासि न तेन तेऽनुनयामि॥७॥

स्फूर्त्त्यपगमे पुनराह हे तन्वि! तव हृदयं त्वदुत्कर्षज्ञानार्थं कृतक्रीडारूपे गुणे दोषारोपणेन खेदयुक्तमहं वेद्मि तत् कथं नानुन-

यदि कुतोगतासि तन्न वेद्मि, तेन हेतुना ते तव पदग्रहणादिना न अपराधं क्षमापयामि ॥ ७ ॥

दृश्यसे पुरतो गतागतमेव मे विदधासि ।
किं पुरेव ससम्भ्रमं परिरम्भणं न ददासि ॥८॥

पुनः स्फूर्त्त्या आह हे प्रिये ! ममाग्रतः यातायातं विदधासीति दृश्यसे तत् किं पुरेव ससम्भ्रमं परिरम्भणं न ददासि पुरःस्थितायाः प्रियायाः निष्ठुरतेदृशी न युक्तेत्यभिप्रायः ॥ ८ ॥

क्षम्यतामपरं कदापि तवेदृशं न करोमि ।
देहि सुन्दरि दर्शनं मम मन्मथेन दुनोमि ॥९॥

पुनः स्फूर्त्त्यपगमे हे सुन्दरि ! क्षम्यतामपराधमिमम् अपरमीदृशमपराधं कदाचिदपि न करोमि अतो मम दर्शनं देहि, यतस्तव प्रियोऽहं मन्मथेन मनो मथ्नातीति मन्मथो विरहस्तेन दुनोमि स्वाधीने अपराधिनि दण्डएव युक्तो नोपेक्षेति भावः ॥ ९ ॥

वर्णितं जयदेवकेन हरेरिदं प्रवणेन ।
केन्दुबिल्वसमुद्रसम्भवरोहिणीरमणेन ॥१०॥

श्रीजयदेवकेन हरेरिदं विलपनं वर्णितं, स्वार्थे कः कीदृशेन प्रवणेन नम्रेण पुनः कीदृशेन केन्दुबिल्वनामा जयदेवस्य निवासग्रामः केन्दग्रामइति कुलञ्च तयोर्महत्त्वत्वात् समुद्रत्वेन निरूपणं तदुद्भवचन्द्रेण यथा समुद्रोद्भवश्चन्द्रः समुद्रवृद्धिकरः तथायमपि तदुभयवृद्धिकरइत्यर्थः ॥ १० ॥

हृदि विषलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्यानङ्ग क्रुधा किमु धावसि॥११

उक्तमन्मथसन्तापमेतत् स्फूर्त्त्या साक्षादिव विवृणोति हृदीति। हे अनङ्ग! क्रुधा किमु धावसि मदर्थञ्चेत्तर्हि हरस्य भ्रान्त्या प्रहारं मयि माकुरु अहं हरो न भवामीति, हरभ्रान्तिं वारयन्नाह प्रियारहिते मयीति सतु प्रियाद्धाङ्गयुक्तस्तल्लक्षणानि दृश्यन्ते इतिचेन्न हृदि मृणाललताहारोऽयं वासुकिर्न, कण्ठे कुवलयदलश्रेणीयं सा गरलद्युतिर्न, सर्वाङ्गे चन्दनरजइदं भस्म न, अतोहरभ्रान्तिर्नकार्य्येति भावः ॥ ११ ॥

पाणौ मा कुरु चूतशायकममुं मा चाप-
मारोपय क्रीडानिर्ज्जितविश्व मूर्च्छितजना-
घातेन किं पौरुषम्। तस्याएव मृगीदृशो
मनसिजप्रेङ्खत्कटाक्षाशुगश्रेणीजर्ज्जरितं मना-
गपि मनो नाद्यापि सन्धुक्षते ॥ १२ ॥

न केवलं मदङ्गदाहाच्छिवो मम वैरी भवानपि उल्लङ्घितशासनत्वात् अतस्त्वामपि प्रहरिष्यामीत्यतआह हे मनसिज! अमुं चूतमुकुलवाणं पाणौ मा कुरु, यदि पाणौ कृतवानसि तदा पाणावेवास्तां चापं मारोपय, चापारोपितवाणः प्राणान् हरिष्यतीत्यभिप्रायः। कथमेवं विधेयम् इत्यतआह क्रीड़या निर्जितं विश्वं येन हे तथाविध! मूर्च्छितजनस्य प्रहारेण किं पौरुषं न किमपि, कथं भवान् मूर्च्छितः तस्याः श्रीराधिकायाएव उच्छलन्त्या कटाक्षवाणश्रेण्या जर्ज्जरितं मम मनोऽल्पमपि अधुनापि न संधुक्षते न दीप्यते सुस्थं न भवतीत्यर्थः॥ १२॥

भ्रूपल्लवं धनुरपाङ्गतरङ्गितानि
वाणा गुणः श्रवणपालिरिति स्मरेण।
तस्यामनङ्गजयजङ्गमदेवताया-
मस्त्राणि निर्ज्जितजगन्ति किमर्पितानि ॥१३॥

श्रीराधायाः कटाक्षाशुगस्मरणेन तत्स्फूर्त्त्याह भ्रूपल्लवमिति ।

इत्यनेन प्रकारेण अस्त्राणि तस्यां श्रीराधिकायां किं स्मरेणार्पितानीति मन्ये कुतोऽर्पितानि तानीत्याह यतोऽनिर्जितानि जगन्ति यैस्तानि तत्प्रसादलब्धास्त्रैर्जगन्ति जित्वा कृतकार्य्याणि पुनस्तत्रैवार्पितानीतिभावः कुतस्तस्यामेवार्पितानि यतोऽङ्गरहितस्यापि कामस्य जये जङ्गमदेवतारूपायां कान्यस्त्राणीत्याह भ्रूपल्लवमेवधनुः अपाङ्गतरङ्गितानि कटाक्षाः तान्येव बाणाः श्रवणप्रान्तभागः स एव गुण इति ॥ १३ ॥

**भ्रूचापे निहितः कटाक्षविशिखो निर्म्मातु मर्म्मव्यथां, श्यामात्मा कुटिलः करोतु कबरीभारोऽपि मारोद्यमम्। मोहं तावदयञ्च तन्वि तनुतां बिम्बाधरो रागवान् सद्वृत्तस्तनमण्डलस्तव कथं प्राणैर्मम क्रीडति ॥ १४ ॥**

एवं परोपकारिण्यास्तव मयि निर्दयता न युक्ता इत्याह भ्रूचापइति। भ्रूचापारोपितः कटाक्षबाणो मम मर्म्मव्यथां करोतु नात्रानौचित्यं चापारोपितबाणस्य दुःखजनकस्वभावत्वात् तथा वक्रश्यामरूपः केशवेशोऽपि मारणाय पराक्रमं करोतु नात्रानौचित्यं मलिनस्य कुटिलात्मनो मारकस्वभावत्वात् हे तन्वि! बिम्बफलतुल्योऽयमधरो मूर्च्छां तनुतां नात्राप्यनौचित्यं यतोऽयं रागवान् रागी, इदम्प्यनुचितं सद्वृत्तः सुवर्त्तुलः स्तनमण्डलो मम प्राणहरणरूपक्रीड़ां किमिति करोति सच्चरितस्य तथाचरणमनुचितमिति भावः। मारो मृत्यौ विघ्नेऽनङ्ग इति, पद्ये चरित्रे वर्त्तुले वृत्तमिति च विश्वः ॥ १४ ॥

**तानि स्पर्शसुखानि ते च तरलाः स्निग्धा दृशोर्विभ्रमास्तद्वक्त्राम्बुजसौरभं स च सुधास्यन्दी गिरां वक्रिमा। सा बिम्बाधरमाधुरीति विषयासङ्गेऽपि चेन्मानसं तस्यां लग्नसमाधि हन्त विरहव्याधिः कथं वर्द्धते ॥ १५ ॥**

अतस्तद्विलासानुभवस्फूर्त्त्या आह तानीति । कस्यां श्रीराधायां यदि मनोलग्नसमाधि प्राप्ततत्साक्षात्कारानन्दं तर्हि विरहव्याधिः तापकार्श्यादिः कथं वर्द्धते इत्लेति खेदे वियुक्तयोरेव विरहः स्यादत्र मनःसंयोगो वर्त्ततइत्यभिप्रायः । सत्यपि मनःसंयोगे चक्षुरादीनां पञ्चेन्द्रियाणां संयोगाभावात् विरहव्याधिर्युक्तइत्याह इत्युक्तप्रकारेण विषयासङ्गे पञ्चेन्द्रियसुखे अनुभूयमाने ऽपीत्यर्थः कोऽसौप्रकार इत्याह तानि स्पर्शसुखानि पूर्व्वानुभूतानीत्यर्थः अनेन त्वगिन्द्रियसुखं, तथा तरलाः स्निग्धाश्च दृशोर्विलासाः अनेन चक्षुरिन्द्रियस्य, तद्वक्त्राम्बुज-सौरभमिति घ्राणस्य, तथा सच सुधास्यन्दी गिरां वक्रिमा इतिश्रव-णयोः, तथैव च सा विम्बाधरमाधुरीति रसनाइति ॥ १५ ॥

## तिर्य्यक्कण्ठविलोलमौलितरलोत्तंसस्य वंशोच्चरद्गीतिस्थानकृतावधानललनालक्षैर्नसं-लक्षिताः। सम्मुग्धं मधुसूदनस्य मधुरे राधा-मुखेन्दौ मृदुस्पन्दं कन्दलिताश्चिरं दधतु वः क्षेमं कटाक्षोर्म्मयः ॥ १६ ॥

इति श्रीगीतगोविन्दे मुग्धमधुसूदनोनामतृतीयः सर्गः ।

अथ कविर्नामुद्दीच्य इति श्रीराधिकावचनं प्रमाणीकृत्य गोपीम-ण्डलस्थस्य श्रीकृष्णस्य पूर्वोक्त श्रीराधिकादर्शन प्रकारमाह तिर्य्यगिति । मधुसूदनस्य कटाक्षतरङ्गा वो युष्माकं क्षेमं दधतु पूर्वोक्तमधुसूदन-पदतात्पर्य्यं व्यनक्ति कीदृशाः राधामुखेन्दौ ईषत् चञ्चलं सम्मुग्धमल-क्षितञ्च यथा स्यात्तथा पल्लविताः अन्यगोपाङ्गनावदनोडुगणमपहाय तत्रैवोल्लसिता इत्यर्थः कथमनेकाङ्गनानिकरे तल्लिङ्गिरित्याह वंशोच्च-रद्गीतिस्थानेषु स्वरग्राममूर्च्छनादिषु समर्पितचित्तवृत्तिभिर्ललनालक्षै-र्न संलक्षिताः । यद्वा गीतिस्थानं सुखम् अनेन तादृशैरप्यलक्षितत्वेन चातुर्य्यं सूचितम् । कीदृशस्य तिर्य्यक् कण्ठोयस्य विलोलः शिरो-भूषणं यस्य तरलः कर्णभूषणं यस्य सच सच सच तस्य । कन्दलस्तु

नवाङ्कुर इत्यमरः अतएव मुग्धमधुसूदनः रसविशेषास्वादचतुरः अतो मुग्धो मधुसूदनो यत्र ॥ १६ ॥

इति श्रीगीतगोविन्दटीकायां तृतीयः सर्गः ।



## चतुर्थः सर्गः ।

यमुनातीरवानीरनिकुञ्जे मन्दमास्थितम् ।
प्राह प्रेमभरोद्भ्रान्तं माधवं राधिकासखी ॥१॥

अथ श्रीराधिकाविरहोत्कण्ठितं श्रीकृष्णं समखीमाश्वास्य आगता सखी प्राह यमुनेति । श्रीराधिकासखी माधवं प्राह कीदृशं श्रीराधिकाविषयप्रेमाधिक्येन उद्भ्रान्तमुन्मत्तम् अतएव तदन्वेषणं विहाय यमुनातीरस्य वेतसीकुञ्जे मन्दं निरुद्यमं यथा स्यात्तथा आसीनम् । वेतसे शीतवानीरवञ्जुलादित्यमरः ॥ १ ॥

कर्णाटरागयतितालाभ्यां गीयते ।

निन्दति चन्दनमिन्दुकिरणमनुविन्दति खेदमधीरं
व्यालनिलयमिलनेन गरलमिव कलयमिव कलयति मलयसमीरम् ॥

सा विरहे तव दीना
माधव मनसिजविशिखभयादिव भावनया त्वयि लीना ॥२॥ ध्रुवं ॥

गीतस्यास्य कर्णाटरागः । यथा कृपाणपाणि र्गजदन्तपत्रमेकं वहन् दक्षिणकर्णपूरम् । संस्तूयमानः सुरचारणाद्यैः कर्णाटरागः

शिखिकण्ठनील इति । एकतालीतालः अस्य लक्षणं प्रागुक्तम् । हे माधव ! सा श्रीराधा तव विरहनिमित्तं दीना दुःखिता, अतो-त्प्रेक्षते कामबाणस्य भयात् त्वयि ध्यानेन लीनेवास्ते बाणप्रयोक्तृ-रिकारूपे त्वयि प्रसन्ने तद्भयं न भविष्यतीत्यभिप्रायः। नकेवल-मेतच्चन्दनमिन्दुकिरणाश्च निन्दति स्वभावशीतलौ यस्मां दहतस्तस्म-मैव दुर्दैवमित्यनु पश्चात् अधीरं यथा स्यात्तथा खेदं विन्दति तथा चन्दनतरोः सम्पर्केण मलयसमीरं गरलमिव मन्यते तत्रस्थसर्प-मुक्तोज्झितो वायुः विषमिश्रितत्वाद्विषमिव उत्प्रेक्षते ॥ २ ॥

**अविरतनिपतितमदनशरादिवभवदवनायविशालं**
**स्वहृदयमर्म्मणि वर्म्म करोति सजलनलिनीदल-**
**जालम् ॥३॥**

त्वय्यतिस्निग्धा सा त्वं कथं निष्ठुरोऽसीत्याह स्वहृदयमर्म्मस्थाने सजलनलिनीदलजालं पृथुलं वर्म्म कवचं करोति तत्रोत्प्रेक्षते निर-न्तरनिपतितमदनशरभयात् तव रक्षणार्थमेव तस्या हृदये भवांस्ति-ष्ठति हृदयं कामो विध्यति मर्म्मस्थानत्वात् हृदयवेधनाच्च भवतोपि वेधः स्यादिति तव रक्षणार्थं सा सन्नह्यत इत्यर्थः। निपतितइति भावे क्तः अविरतं निपतनं यस्य इति विग्रहः पतितबाणावरणा-सम्भवात् ॥ ३ ॥

**कुसुमविशिखशरतल्पमनल्पविलासकलाकमनीयं**
**व्रतमिव तव परिरम्भसुखाय करोति कुसुमशय-**
**नीयम् ॥ ४॥**

अन्यदपि सा कुसुमशय्यां करोति कीदृशम् अनल्पविलासकलया कम-नीयं काङ्क्षणीयं विरहे तदपि कामशरशय्यायत इत्युत्प्रेक्षते कामशरशय्या व्रतमिव। ननु अतिदुष्करं जीवनसन्देहोत्पादकं किमिति करोति, तव परिरम्भ सुखाय, दुष्प्रापं तव परिरम्भणसुखमित्यर्थः ॥ ४ ॥

वहति च वलितविलोचनजलधरमाननकमल-
मुदारम्। विधुमिव विकटविधुन्तुददन्तदल-
नगलितामृतधारम्॥ ५॥

नकेवलं कुसुमशयनीयं करोति अपिच उदारमाननकमलं धारयति कीदृशं वलितानि अविरतं गलितानि नयनयोर्जलानि धारयतीति तत् कमिव विधुमिव कीदृशं विधुं करालस्य राहोर्दन्तस्य चर्व्वणेन गलिता अमृतधारा यस्य तम्। विकटो विशाल करालयोरिति विश्वः॥ ५॥

विलिखति रहसि कुरङ्गमदेन भवन्तमशसमर
भूतम्। प्रणमति मकरमधो विनिधाय करे च
शरं नवचूतम्॥६॥

किञ्च कामरूपेण त्वदावेशात् त्वामेवाराधयतीत्याह सा भवन्तमेकान्ते सख्याः अदृश्य स्थाने कस्तूर्य्या विलिखति कीदृशं कामतुल्यं कामांशे साहश्यमाह मकरमधो विनिधाय करे च नवाम्रमुकुलवाणमपि विनिधाय लिखित्वा हे नाथ! गृहीताम्रमुकुलस्त्वं किमिति प्रहरसीति प्रणमति त्वदन्यः कामोनास्तीति मत्वेति भावः स्वचित्तोन्मादकत्वात्॥ ६॥

प्रतिपदमिदमपि निगदति माधव तव चरणे
पतिताहम्। त्वयि विमुखे मयि सपदि सुधा-
निधिरपि तनुते तनुदाहम्॥ ७॥

सा न केवलं प्रणमति हे माधव! मधोः सखे तव चरणे अहं पतिता इदमपि प्रतिक्षणं जल्पति कथं मच्चरणे पतसि त्वयि विमुखे सति तत्क्षणादेव अमृतनिधिश्चन्द्रोपि मयि तनुदाहं तनुते॥ ७॥

ध्यानलयेन पुरः परिकल्प्य भवन्तमतीव दुरापं।

विलपति हसति विषीदति रोदिति चञ्चति-
मुञ्चति तापम् ॥ ८ ॥

पुनस्त्वातिव्यग्रतया ध्यानलयेन भवन्तं साक्षादिव कृत्वा विलपति कथं ध्यानलयेन पुरः कल्पते साक्षात् कथं न क्रियत इत्याह दुरापं दूतीप्रेषणादिनापि अप्राप्यं,त्वत्प्राप्त्यानन्दोच्छलिता हसति पुनरन्त-र्ध्याने विषीदति रोदिति च पुनः स्फुरन्तमनुधावति पुनः प्राप्तमि-त्यालिङ्गनादिना तापं मुञ्चति ॥ ८ ॥

श्रीजयदेवभणितमिदमधिकंयदिमनसानटनीयं ।
हरिविरहाकूलवल्लवयुवतिसखीवचनं पठनीयं॥ ९

यदि मनसा नटनीयं नर्त्तयितव्यं तदा श्रीजयदेवभणितमिदम् अधिकं यथा स्यात्तथा पठनीयं कुतः यतो हरिविरहाकुलायाः श्रीराधिकायाः सख्यावचनं यत्र तत् ॥ ९ ॥

आवासो विपिनायतेप्रियसखीमालापिजालायते
तापोऽपि श्वसितेन दावदहनज्वालाकलापायते।
सापि त्वद्विरहेण हन्त हरिणीरूपायते हा कथं
कन्दर्पोऽपियमायते विरचयन् शार्दूलविक्रीडितं

सा त्वां विना कुत्रापि निर्वृतिं न लभते इत्याह आवासइति। हे श्रीकृष्ण! सा श्रीराधा त्वद्विरहेण हन्त इति खेदे हरिणी-रूपायते मृगीवाचरति श्लेषोक्त्या पाण्डुवर्णापीत्यर्थः कथं हरिणी-रूपायतइत्याह वसतिस्थानं अरण्यमिवाचरति प्रियसङ्गम मन्तरेण दुःखजनकत्वात् प्रियसखीमालापि जालमिवाचरति कुत्रचिद्गमन शङ्कया जालवद् वेष्टितत्वात् गात्रसन्तापोऽपि निःश्वासेन तथा सन्ता-पयति यथा वातेनाग्नेरुल्का निर्दहतीत्यर्थः। हा इति विषादे कन्दर्पोऽपि शार्दूल विक्रीड़ितं विरचयन् किमिति यमइवाचरति महद्वेतदनुचितं प्राणहरणचेष्टत्वादित्यभिप्रायः यथा वने मृगी दाव

ज्वालयोद्विग्ना व्याघ्रवासिता जालपतिता कापि निर्वृतिं न लभते तथेयमपीत्यर्थः प्रत्येकेनानेन हरिण्या इव श्रीराधिकायाः प्रियदृढ़ानुरागो दर्शितः। श्रीकृष्णस्य काठिन्यं शिक्षायामस्नेहव्यवसायत्वात् ॥ १० ॥

देशागररागैकतालीतालाभ्यां गीयते ।

स्तनविनिहितमपि हारमुदारं
सा मनुते कृशतनुरिव भारम् ।
राधिका तव विरहे केशव ॥२१॥ ध्रुवम् ॥

पुनस्तच्चेष्टामेव विशेषतयाह स्तनेत्यादिना। गीतस्यास्य देशागररागः यथा आस्फोटनाविष्कृतलोमहर्षो निबद्धसन्नाहविशालबाहुः। प्रांशुः प्रचण्डद्युतिरिन्दुगौरो देशागररागः किल मल्लमूर्त्तिरिति। तालस्वैकताली। हे केशव! सा कृशतनुः श्रीराधा सखीभिर्यत्नेन स्तनविनिहितमुत्कृष्टमपि हारं तव विरहे भारमिव मनुते अत्र हेतुः कृशतनुः तथेयं कृशाभूता यथा हारवहनसामर्थ्यमपि नास्तीत्यर्थः ॥ ११

सरसमसृणमपि मलयजपङ्कम् ।
पश्यति विषमिव वपुषि सशङ्कम् ॥ १२॥

न केवलं हारवहनासामर्थ्यम् अपितु तापशान्त्यै सरसमपि मसृणं चिक्कणमपि चन्दनपङ्कं वपुषि दत्तं सशङ्कं यथा स्यात्तथा विषमिव पश्यति ॥ १२ ॥

श्वसितपवनमनुपमपरिणाहम् ।
मदनदहनमिव वहति सदाहम् ॥ १३ ॥

किञ्च दाहसहितं निःश्वासपवनमपि कामाग्निमिव वहतीत्युत्प्रेक्षा सन्तप्तायाः निःश्वासोपि सन्तप्त इत्यर्थः कीदृशम् उपमारहितं दैर्घ्यं यस्य तम् ॥ १३ ॥

दिशि दिशि किरति सजलकणजालम् ।

नयननलिनमिव विदलितनालम् ॥ १४ ॥

तथा सा नयननलिनं त्वद्विच्छासम्भ्रमात् दिशि दिशि विक्षिपति कीदृशं जलकणिकाभिः सहितं किमिव विच्छिन्नं नालं यस्य तदिव विच्छिन्ननालं हि कमलं सत्त्वरं विक्षिप्तञ्च भवतीत्यर्थः ॥ १४ ॥

नयनविषयमपि किशलयतल्पम् ।
गणयति विहितहुताशविकल्पम् ॥ १५ ॥

अपरञ्च चक्षुर्गोचरमपि पल्लवशय्यां विहितो वह्नेर्विकल्पो भ्रमो यत्र तत् यथा स्यात्तथा पश्यति ॥ १५ ॥

त्यजति न पाणितलेन कपोलम् ।
बालशशिनमिव सायमलोलम् ॥ १६ ॥

सा पाणितलेन कपोलं न त्यजति तत्रोपमामाह सायमचञ्चलं बालशशिनमिव कपोलस्यार्द्धभागदर्शनाद्बालचन्द्रेणोपमा आताम्रत्वात् पाणितलस्य सन्ध्यायाः समत्वं विरहेण पाण्डुत्वात् कपोलस्य चन्द्रेण साम्यम् ॥ १६ ॥

हरिरिति हरिरिति जपति सकामम् ।
विरहविहितमरणेव निकामम् ॥ १७ ॥

अपिच साभिलाषं यथेष्टञ्च यथा स्यात्तथा हरिरिति हरिरिति जपति, केव मरणे या मतिः सा गतिरिति जन्मान्तरेऽपि स वल्लभो भूयादिति सकामत्वं, केव विरहेणारब्धं मरणं यस्याः सेव ॥ १७ ॥

श्रीजयदेवभणितमिति गीतम् ।
सुखयतु केशवपदमुपनीतम् ॥ १८ ॥

इत्यनेनोक्तप्रकारेण श्रीजयदेवभणितं केशवपदमुपनीतं तत्पदयोः समर्पितचित्तमिति यावत् तं जनं सुखयतु अर्थात् श्रोतॄन् ॥ १८ ॥

सा रोमाञ्चति शीत्करोति विलपत्युत्कम्पते ताम्यति
ध्यायत्युद्भ्रमति प्रमीलति पतत्युद्याति मूर्च्छत्यपि ।
एतावत्यतनुज्वरे वरतनुर्जीवेन्न किन्ते रसात्
स्वर्वैद्यप्रतिम प्रसीदसि यदि त्यक्तोऽन्यथा हस्तकः
॥ १९ ॥

पुनरतीव वैकुल्यं दर्शयति सा रोमाञ्चतीति । हे अश्विनीकुमारवत् सुचिकित्सक ! त्वं यदि प्रसीदसि तदैव एतावत्यतनुज्वरे सा वरतनुस्ते रसप्रयोगात् किं न जीवेदपितु जीवेदेवेतिच्छलोक्तिः वास्तवः कामज्वरः वरतनुरिति तत्समा अन्या नास्तीति तस्या रक्षणं युक्तमितिभावः अतएव ज्वरलक्षणान्याह सा रोमाञ्चति पुलकाञ्चिता भवतीति शीदिति शब्दं करोति शीदित्यनुकरणं, विलपति उच्चैः कम्पते ग्लानिमाप्नोति कथं लभ्यतइति चिन्तयति उच्चैर्भ्रान्तिमाप्नोति अक्षिणी सङ्कोचयति, भूमौ लुठति उत्थातुमिच्छति, मूर्च्छामाप्नोति, महाज्वरस्यादौ रसदानं निषिद्धं, अन्यथा अन्यप्रकारेण हस्तकः हस्तक्रिया पाचनाद्यौषधान्तरदानं वैद्यैस्त्यक्तः स्यादाने दानेऽप्यौषधस्य विशेषाप्राप्तेरित्यभिप्रायः कामज्वरपक्षे हस्तक्रियाशीतलोद्युपचारः सखीभिस्त्यक्तइत्यभिप्रायः क्रतेष्वुपचारे तद्वृद्धेरिति भावः ॥ १९ ॥

स्मरातुरां दैवतवैद्यहृद्य त्वदङ्गसङ्गामृतमात्रसाध्याम् । विमुक्तबाधां कुरुषे न राधामुपेन्द्रवज्रादपि दारुणोऽसि ॥ २० ॥

तदेव श्लोकोक्तं सख्यार्त्तिस्मरणवैकुल्यात् साक्षात् कथयति स्मरेति । हे दैवतवैद्याभ्यामपि हृद्य निपुण ! इन्द्रवज्रादुपअधिकम् उपेन्द्रवज्रं तदपि चेत्तावत् तस्मादपि त्वं दारुणोऽसीति मन्यते यत इन्द्रक्षिप्तं वज्रं अङ्गं संस्पृश्य व्यथयति त्वन्तु विश्लेषे तत्रापि दूरतः अत उप अधिके अधिकदारुणोऽसीत्यर्थः कथमेवं मन्यसे यत-

त्वदङ्गसङ्गान्तमात्रसाध्यां स्मरातुरां राधां विमुक्तबाधां न कुरुषे अङ्गसङ्गमात्रसाध्यकर्म्माकरणेन काठिन्यमेव पर्य्यवसितमित्यर्थः ॥२०॥

कन्दर्पज्वरसंज्वरातुरतनोराश्चर्य्यमस्याश्चिरं
चेतश्चन्दनचन्द्रमः कमलिनीचिन्तासु संताम्यति।
किन्तु क्षान्तिवशेन शीतलतनुं त्वामेकमेव प्रियं
ध्यायन्ती रहसि स्थिता कथमपि क्षीणा क्षणं
प्राणिति ॥२१॥

श्रीकृष्णे तस्या अत्यन्तरागोद्रेकं कथयन्ती त्वदङ्गसङ्गमात्रसाध्यत्वमतिशयेन आह कन्दर्पेति। कन्दर्पज्वरेण यः सन्तापस्तेन आतुरतनोः प्रतिक्षणानिष्टसम्पादकदेहाया अस्याः श्रीराधायाश्चेतश्चन्दनादीनां सर्व्वसन्तापशमकतया प्रसिद्धानां स्मरणेष्वपि चिरं सन्ताम्यतीत्याश्चर्य्यं स्पर्शादिकन्तु दूरे परिहृतमित्यर्थः यद्येवं तर्हि कथं जीवतीत्याह त्वदागमनप्रतीक्षा क्षान्तिस्तत्र योरसः अनुरागस्तेन त्वामेकमेव प्रियं रहसि स्थिता ध्यायन्ती क्षीणापि कथमपि जीवति एकमेवेत्यनन्यगतिकत्वं सूचितं अतस्त्वया शीघ्रं गन्तव्यमित्यर्थः कीदृशं शीतलतरं चन्दनादयः शीतलास्त्वं शीतलतरस्तद्ध्याने जीवतीत्याश्चर्य्यान्तरमित्यभिप्रायः ॥ २१ ॥

क्षणमपि विरहः पुरा न सेहे
नयननिमीलनखिन्नया यया ते ।
श्वसिति कथमसौ रसालशाखां
चिरविरहेण विलोक्य पुष्पिताग्राम् ॥२२॥

अतिव्याकुलतया सदैन्यमाह क्षणमिति। हे माधव! नयनयोर्निमेषमात्रेण हा कथं नयनयोर्निमेषोनिर्म्मितः येन क्षणं कान्तदर्शनं विहन्यतइति नयननिमीलनखिन्नया श्रीराधया पुरा ते तव विरहः क्षणमपि न सेहे न सोढ़ा असौ चिरविरहेण मुकुलिताग्रभाग-

युक्तां रसालशाखां विलोक्य कथं जीवतीदमप्याश्चर्यं निमेषविरहा-
सहमशीलायाश्चिरविरहसहनमप्याश्चर्यमेवेत्यर्थः ॥ २२ ॥

वृष्टिव्याकुलगोकुलावनवशादुद्धृत्य गोवर्द्धनं
विभ्रद्बल्लववल्लभाभिरधिकानन्दाच्चिरं चुम्बितः ।
दर्पेणैव तदर्पिताधरतटीसिन्दूरमुद्राङ्कितो-
बाहुर्गोपतनोस्तनोतु भवतां श्रेयांसि कंसद्विषः
॥ २३ ॥

इति श्रीगीतगोविन्दे स्निग्धमधुसूदनोनामचतुर्थः सर्गः ।

अयमेवास्मद्गोकुलजनरक्षणाव्रती श्रीगोपेन्द्रकुमारोऽयं मम सख्या विरहतापमपि निवारयिष्यतीति निश्चित्य श्रीराधासखी गोवर्द्धनधारणलीलां स्मरन्ती ससखीसान्त्वनाय चलितेति स्मरन् तल्लीलैकाश्रयं श्रीकृष्णबाहुं वर्णयन् कविराशिषमाशास्ते वृष्टीति । गोपेन्द्रसुनोर्बाहुः भवतां श्रेयांसि तनोतु, कीदृशः दर्पेणाहङ्कारेणैव अर्थादिन्द्रस्य विजिगीषया गोवर्द्धनाचलमुद्धृत्य यो बिभ्रत् तत्र हेतुः वृष्ट्या व्याकुलस्य गोकुलस्य रक्षणे यो रसोवीरस्तस्मात् पुनः कीदृशः गोपाङ्गनाभिः सह श्रीकृष्णस्य वैदग्ध्यसौन्दर्यादिकमुद्वीक्ष्य अधिकानन्दाच्चिरं चुम्बितः तत्रोत्प्रेक्षते तच्चुम्बनाल्लग्नललाटस्थसिन्दूरेण इन्द्रजयलेखोचितमुद्रया अङ्कितइव अतएव श्रीराधिका वैकुल्यश्रवणेन स्निग्धश्चेष्टारहितो मधुसूदनो यत्र सः ॥ २३ ॥

इति श्रीगीतगोविन्दटीकायां चतुर्थः सर्गः ।

---

# गीतगोविन्दे



## पञ्चमः सर्गः ।

**अहमिह निवसामि याहि राधामनुनय मद्वचनेन चानयेथाः । इति मधुरिपुणा सखी नियुक्ता स्वयमिदमेत्य पुनर्जगाद राधाम् ॥ १ ॥**

अथ तदार्त्तिश्रवणव्याकुलोपि स्वापराधचिन्तयातिभीतः स्वयमगच्छन्नात्मदुःखनिवेदनपूर्वकामुनयेन तत्कोपशिथिलीकरणाय सखीमेव प्रेषितयानित्याह अहमिति । मधुरिपुणा नियुक्ता सखी स्वयमेत्य श्रीराधां पुनरिदमुवाच किमुक्त्वा नियुक्ता अहमिहैव निवसामि त्वं राधां याहि, गत्वा किं करोमि मद्वचनेन तामनुनय यदि त्वयैव तन्मानमपनेतुं शक्यते तदा आनयेथाः इत्युक्त्वा सहसा मद्गमनेन मानोतिगाढो भवेदित्यभिप्रायः ॥ १ ॥

देशवराड़ीरागरूपकतालाभ्यां गीयते ।

**वहति मलयसमीरे मदनमुपनिधाय**
**स्फुटति कुसुमनिकरे विरहिहृदयदलनाय ।**
**सखि हे सीदति तव विरहे वनमाली ॥ २ ॥**

गीतस्यास्य देशवराडीरागः रूपकतालः । तल्लक्षणं यथा विनोदयन्ती दयितं सुकेशी सुकङ्कणा चामरचालनेन । कर्णे दधाना स्मरपुष्पगुच्छं वराङ्गनेयं कथिता वराड़ी इति रागलक्षणम् । तालक्षणं प्रागुक्तम् । हे सखि ! तव विरहे वनमाली सीदति त्वत्करकल्पितवनमालावलम्बनेनैव जीवतीति वनमालीशब्दोपन्यासः कदा कदा सीदतीत्याह मदनं सन्निहितं कृत्वा मलयसमीरे वहति सति विरहिणां मर्म्मपीडनाय कुसुमसमूहे च स्फुटति सति ॥ २ ॥

दहति शिशिरमयूखे मरणमनुकरोति ।
पतति मदनविशिखे विलपति विकलतरोऽति ॥३

किञ्च चन्द्रे दहति सति मरणमनुकरोति निश्चेष्टोभवति मूर्च्छतीति यावत् कामवाणे च पतति सति अतिविह्वलो विलपति पुनः कुसुमपतने हृदि विध्यत्कामवाणभ्रमादाक्रोशतीत्यर्थः ॥ ३ ॥

ध्वनति मधुपसमूहे श्रवणमपिदधाति ।
मनसि वलितविरहेनिशि निशि रुजमुपयाति ४

भ्रमरनिचये शब्दायमाने सति कर्णौ कराभ्याम् अपिदधाति आच्छादयतीत्यर्थः अत्युद्रिक्तविरहे मनसि सति निशायां क्षणे क्षणे रुजमधिकं प्राप्नोति निशायास्त्वत्प्राप्तिकालत्वात् त्वदप्राप्त्या मधुपध्वनिश्रवणात् पीड़ामनुभवतीत्यर्थः ॥ ४ ॥

वसति विपिनविताने त्यजति ललितमपि धाम ।
लुठति धरणिशयने बहु विलपति तव नाम ॥५

वसतीति । रुचिरमपि गृहं त्यक्त्वा त्वत्प्राप्त्याशयारण्यमध्ये वसतीत्यर्थः विरहवैकल्यादेकत्र स्थित्यभावाद्वितानशब्दोपादानं तथा त्वदप्राप्त्या भूमौ लुठति बहु यथा स्यात्तथा तव नाम विलपति तव नामधेयादन्यत् तस्य मुखे न निःसरतीत्यर्थः ॥ ५ ॥

भणति कविजयदेवे हरिविरहविलसितेन ।
मनसि रभसविभवे हरिरुदयतु सुकृतेन ॥ ६ ॥

कविजयदेवे भणति सति हरिविरहविलसितेन सुकृतेन मनसि हरिरुदयतु जयदेवभणितहरिविरहविलसितेन हेतुना यदुत्पन्नं सुकृतं पुण्यं तेन गीयतां शृण्वताञ्च हृदि हरिरुदितोभवतीत्यर्थः कीदृशे मनसि रभसस्य प्रेमोत्साहस्य विभवो यस्मिन् तत । एवं प्राणपरार्द्धनिर्म्मञ्छनीयचरणस्य निजप्राणनाथस्य विरहवैकल्यश्रवणेन मूर्च्छितायां सख्यां तस्याश्चपि वाकसम्भोजात इतिपञ्चपदैः समाप्तिः ॥ ६ ॥

पूर्व्वं यत्र समं त्वया रतिपतेरासादिताः सिद्धय-
स्तस्मिन्नेव निकुञ्जमन्मथमहातीर्थे पुनर्माधवः ।
ध्यायंस्त्वामनिशं जपन्नपि तवैवालापमन्त्राक्षरं
भूयस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं वाञ्छति
॥ ७॥

अथ तन्मूर्च्छाविघटनाय उपायान्तरमनपेक्ष्य सखी श्रीकृष्णचरितमेव पुनर्व्वर्णयितुमारब्धेति श्रीराधिकाया अभिसारिकावस्थां सखीवचनेनैव वर्णयिष्यन्नाह पूर्व्वमिति । हे सखि! पूर्व्वं यत्र कुञ्जे कन्दर्पस्य सिद्धयः आश्लेषादिकास्त्वया सह प्राप्तास्तस्मिन्निकुञ्जे मन्मथसिद्धक्षेत्रे पुनर्माधवस्त्वत्कुचकुम्भनिर्भरपरीरम्भामृतं भूयः प्रचुरं वाञ्छति सान्द्रानन्दसन्दोहजनकत्वेन कुचकुम्भपरीरम्भस्यामृतत्वेन, निरूपणं, नन्वेतदतिदुर्लभं तीर्थगमनमात्रेण इष्टदेवताराधनं विना कथं सिद्ध्यति तत्राह निरन्तरं त्वामेव ध्यायन् त्वमेव इष्टदेवता इत्यभिप्रायः ध्यानेऽपि मन्त्रजपमन्तरेण इष्टदेवता अचिरात्प्रत्यक्षा न भवतीत्याह निरन्तरं तवैवालापमन्त्राक्षरं जपन्॥ ७ ॥

गुर्ज्जरीरागैकतालीतालाभ्यां गीयते ।

रतिसुखसारे गतमभिसारे मदनमनोहरवेशं।
नकुरु नितम्बिनि गमनविलम्बनमनुसरतं हृदयेशं॥
धीरसमीरे यमुनातीरे वसति वने वनमाली ।
पीनपयोधरपरिसरमर्द्दनचञ्चलकरयुगशाली
॥८॥ ध्रुवम् ॥

एवं तच्चरित श्रवणेन किञ्चिदुच्छ्वासितायां तस्यामत्युत्सुकतया त्वन्मुखनिरीक्षकः स आस्ते अतस्तदभिसरणं युक्तमित्यभिसाराय प्रार्थ्यते रतिसुखेत्यादिना । अभिसारिकालक्षणं यथा याऽभिसारयते कान्तं स्वयं वाभिसरत्यपि । सा ज्योत्स्नी तामसी यानयोग्यवेषा-

भिसारिका। अस्यापि गुर्जरीरागैकतालीतालौ। यमुनातीरे वने वनमाली उत्कण्ठासूचकवेशो वसति त्वद्वर्त्म निरीक्षमाणः आस्ते, कीदृशे वने मन्दः समीरो यत्र तस्मिन् अनेन सुखदत्वं निविड़त्वात् निर्जनत्वश्चोक्तम्। वने त्वद्गमनं सहजमेव स्यादत आह अभिसारे सङ्केतितत्वदभिसरणस्थाने गतं प्राप्तमभिसृतमित्यर्थः। कीदृशे रतिसुखफलकरूपे कदाचित् कार्यान्तरार्थं गतः स मदनेन त्वन्मिलनाभिलाषौत्सुक्याधिक्येन मनोहरो वेशो यस्य तम्। अतः हे नितम्बिनि गुरुतरनितम्बयुक्ते गमनविलम्बं न कुरु प्रशस्तनितम्बतया सहजगमनवैलम्ब्यादिदमुक्तं तर्हि किं करोमि तमनुसर कीदृशं हृदयेशं प्राणनाथम् अतस्तद्विरहे दुःखितस्यानुसरणे विलम्बो न युक्त इत्यर्थः॥ ८॥

**नामसमेतं कृतसङ्केतं वादयते मृदुवेणुम्।**
**बहु मनुते ननु ते तनुसङ्गतपवनचलितमपि रेणुम्॥९॥**

कदाचिदन्यासक्तः स्यादत आह कृतः सङ्केतो यत्र तं वेणुं तव नामसमेतं मृदुवचनं यथा स्यात्तथा वादयते धूर्तः कदाचित् प्रतारणायेवं करोति तत्र तनुसङ्गतवायुना युक्तं रेणुं बहु मनुते अन्योऽयं रेणुर्यतस्तस्याः शरीरस्पृष्टवायोः स्पर्शसुखमन्वभूत् ममेदृशं भाग्यं नास्तीति बहुमननार्थः॥ ९॥

**पतति पतत्रे विचलति पत्रे शङ्कितभवदुपयानं।**
**रचयति शयनं सचकितनयनं पश्यति तव पन्थानम्॥ १०॥**

त्वदेकपर एव स इत्याह पक्षिणि पतति सति इत्याकूतमात्रित्यर्थात् ज्ञेयम्। पत्रे च वातादिना विचलति सति सन्दिग्धं भवत्या आगमनं यत्र तद्यथा स्यात्तथा शय्यां निर्मिमीते तथा चकितनयनं यथा स्यात्तथा पन्थानं पश्यति अत्रागमनं केन पथा इति पथावलोकनमित्यर्थः॥ १०॥

मुखरमधीरं त्यजमञ्जीरं रिपुमिवकेलिषु लोलं।
चल सखि कुञ्जं सतिमिरपुञ्जं शीलय नील नि
चोलम् ॥११॥

अतो हे सखि! मञ्जीरं त्यज कुञ्जं चल, कथं मञ्जीरं त्याज्यं यतो अधीरम् अतो मुखरं सशब्दं तथा केलिषु चञ्चलं अतोऽभीष्टविरुद्धात् रिपुमिव कीदृशं कुञ्जं तिमिरपुञ्जेन सह वर्त्तमानं गौराङ्ग्या मम कथं गमनं स्यादिति तमपि अभिसारिकोचितवेश-माह नीलं नीचोलं प्रच्छदपटं पिधेहि ॥ ११ ॥

उरसि मुरारेरुपहितहारे घनइव तरलवलाके
तड़िदिव पीते रतिविपरीते राजसि सुकृत
विपाके ॥१२॥

तत्र गमने किं स्यादित्याह हे गौराङ्गि! विपरीतरतौ मुरारे-रुरसि राजस्यपि वर्त्तमानसामीप्ये लट् कीदृशे उपहितो अर्पितो हारो यत्र तस्मिन् तथा सुकृतस्य विपाके फलरूपे, कस्मिन् केव चञ्चला वकपङ्क्तिर्यत्र तस्मिन् घने विद्युदिव, उरसो घनेन हारस्य वलाकया गौर्य्यास्तड़िता साम्यम् ॥ १२ ॥

विगलितवसनं परिहृतरसनंघटयजघनमपिधानं
किशलयशयने पङ्कजनयने निधिमिव हर्षनिधा
नम् ॥१३॥

अतो गत्वा हे पङ्कजनयने किशलयशयने जघनं घटय कीदृशं क्षणेन हेतुना विगलितं वसनं यस्मात्तत् तेनैव दूरीकृता रसना काञ्ची यस्मात् तत् अतएवापिधानमावरणरहितं ततश्च तस्यैव हर्षनिधानं कमिव निधिमिव गतावरणस्य निधेर्दर्शनेमहर्षोजायत एवेत्यर्थः ॥१३॥

हरिरभिमानी रजनिरिदानीमियमपि याति

विरामम्। कुरु मम वचनं सत्वररचनं पूरय
मधुरिपुकामम्॥ १४॥

किञ्च हरिरतिशयेन त्वां मानयितुं शीलं यस्य सः त्वदेकपर इत्यर्थः। अभिमानीति अन्याभिसारशङ्कामप्यापादयति इयं प्रत्यक्षं दृश्यमाना रजनिरेवावसानं यातीति तस्मान्मम वचनं सत्वरा रचना परिपाटीर्यत्र तद्यथा स्यात्तथा कुरु किन्तदित्याह मधुरिपोर्मनोरथं पूरय॥ १४॥

श्रीजयदेवे कृतहरिसेवे भणति परमरमणीयं।
प्रमुदितहृदयं हरिमतिसदयं नमत सुकृतकम-
नीयम्॥ १५॥

कृतहरिसेवे श्रीजयदेवे भणति सति भोः साधवः प्रमुदितहृदयं यथा स्यात् तथा हरिं नमत कीदृशम् अतिसदयं तथा परमरमणीयं यतः सुकृतेन शोभनचरितेन कमनीयं सर्व्वैर्व्विशेषेण वाञ्छनीयम्॥ १५॥

विकिरति मुहुः श्वासानाशाः पुरो मुहुरीक्षते
प्रविशति मुहुः कुञ्जं गुञ्जन्मुहुर्बहु ताम्यति।
रचयति मुहुः शय्यां पर्य्याकुलं मुहुरीक्षते
मदनकदनक्लान्तः कान्ते प्रियस्तव वर्त्तते॥१६॥

तथातिशोभमभिसारयितुं प्रियदुःखमेव वर्णयति विकिरतीति। हे कान्ते तव प्रियो मदनकदनक्लान्तः सन् वर्त्तते क्लान्ततामाह नागतैव सा मत्प्रियेति कृत्वा मुहुर्व्वारम्वारं श्वासान् विशेषेणोष्णैः किरतीत्यर्थः। अधुना आगमिष्यतीति कृत्वा अग्रे दिशो मुहुरीक्षते कदाचिदन्येन पथागत्य तिष्ठतीति मुहुः कुञ्जं प्रविशति प्रविश्य त्वामपश्यन् कथं नागतेति मुहुरव्यक्तशब्दं कुर्व्वन् बहु यथा स्यात्तथा म्लायति मयि दृढानुरागैव साम्प्रतम् एवागमिष्यतीति मुहुः शय्यां

रचयति मच्चित्तजिज्ञासार्थं कदाचिदितो निर्गत्य तिष्ठतीति पर्य्याकूलं यथा स्यात् तथा मुह्यतीत्यते ॥ १६ ॥

त्वद्वाक्येन समं समग्रमधुना तिग्मांशुरस्तं गतो-
गोविन्दस्य मनोरथेनच समं प्राप्तं तमःसान्द्रतां ।
कोकानां करुणस्वनेन सदृशी दीर्घा मदभ्यर्थना
तन्मुग्धे विफलं विलम्बनमसौ रम्योऽभिसार
क्षणः ॥ १७॥

अतः संप्रत्येव गमनं सांप्रतमिति गमनसमयानुकूल्यमाह त्वदिति । तव वक्रतया सह अधुना सूर्य्यः समग्रमस्तं गतः गोविन्दस्य मनोरथेन अविच्छिन्नस्मर्य्यमाणा तया धैर्य्योन्मूलकाभिलाषेण च तमोऽन्धकारो निविड़तां प्राप्तं चक्रवाकानां करुणस्वनेन तुल्या मदभ्यर्थना च युवयोर्दशां विलोक्य प्राप्तदैन्या दीर्घा जाता तत्तस्मात् हे मुग्धे विचारानभिज्ञे विलम्बनं विफलं यतः असौ क्षणोऽभिसारे रम्यः प्रियतम उत्कण्ठितः रम्यश्चाभिसारक्षणः चिरमभ्यर्थनपरा सखी तथापि वेशादिव्याजेन गमन विलम्बनमिति मौग्ध्यम् ॥ १७ ॥

आश्लेषादनु चुम्बनादनु नखोल्लेखादनु स्वान्तज।
प्रोद्बोधादनु संभ्रमादनु रतारम्भादनु प्रीतयोः
अन्यार्थं गतयोर्भ्रमान्मिलितयोः सम्भाषणैर्जानतो
र्दम्पत्योरिह कोन कोन तमसि व्रीडाविमिश्रो
रसः ॥१८॥

अथोत्कण्ठावर्द्धनाय तन्मनोरथमेव विवृत्याह आश्लेषादिति । इह तमसि दम्पत्योराधयोर्व्रीड़या कथं सहसैव कर्त्तुमारब्धमित्येवं भूतया लज्जया मिश्रितोरसः शृङ्गाररूपः कोन कोन अभूदपितु सर्वस्सैवाभूदित्यर्थः पूर्वकालीने मेघैर्मेदुरमित्याद्युक्तगाढान्धकारे यथा-

भूत् तथेह गोविन्दस्य मनोरथकथनेन अभिसर्त्तुं श्रीराधिकात्यन्तप्रोत्साहनम् उक्तं पूर्वकालीनानुभवमेवाह कीदृशोः अन्यार्थम् अन्योन्यप्राप्त्यार्त्तिभरेण अवस्थाविशेष विधानार्थं गतयोः पुनः कीदृशोः भ्रमाद्भ्रमणं विधाय मिलितयोः तर्हि कथं क्रीडामिश्रितरसस्य सम्भाषणैस्तत्कालोचितालापैर्जनतोः ततः प्रथमाश्लेषात् तदनु चुम्बनात् तदनु नखोल्लेखात् तदनु कामस्य प्रकाशनात् तदनु सम्भ्रमात् तत्कालोचितवेगात् तदनु रतारम्भात् तदनु प्रीतयोः तस्मात् ईदृशोत्कण्ठिते तस्मिन् तव गमनविलम्बो न युक्त इत्यभिप्राय पूर्व्वानुभूतस्फूर्त्त्याशौ मनोरथः ॥ १८ ॥

सभयचकितं विन्यस्यन्तीं दृशौ तिमिरे पथि
प्रतितरु मुहुः स्थित्वा मन्दं पदानि वितन्वतीं ।
कथमपि रहः प्राप्तामङ्गैरनङ्गतरङ्गिभिः
सुमुखि सुभगः पश्यन् स त्वामुपैतु कृतार्थताम्
॥ १९ ॥

अथ एतत्स्मरणव्यग्रतया गमनसम्मतिमालोक्य गमनप्रकारमाह सभयेति। हे सुमुखि मानापगमेन प्रसन्नवदने! भाग्यवान् स श्रीकृष्णः त्वां पश्यन् कृतार्थोभवतु कीदृशीं सभयचकितं यथा स्यात् तथा तिमिरे पथि नेत्रे विन्यस्यन्तीम्। केनचित् कुत्रचित् तिष्ठता द्रक्ष्येऽहमिति नेत्रस्य सभयचकितत्वं तथा प्रतितरु तरौ तरावित्यर्थः स्थित्वा कियद् दूरे कृष्णः प्रिय इति मन्दं पदानि वितन्वतीं दौर्बल्यात् शीघ्रगमनाशक्त्या पादयोर्मन्दविन्यासत्वम् अतः कथमपि रहःप्राप्तां यतः अनङ्गतरङ्गिभिरङ्गैरुपलक्षिताम् उत्कण्ठयानङ्गतरङ्गित्वमङ्गानाम् ॥ १९ ॥

राधामुग्धमुखारविन्दमधुपस्त्रैलोक्यमौलिस्थली
नेपथ्योचितनीलरत्नमवनीभारावतारान्तकः।

स्वच्छन्दं व्रजसुन्दरीजनमनस्तोषप्रदोषश्चिरं
कंसध्वंसनधूमकेतुरवतु त्वां देवकीनन्दनः ॥२०॥

इति श्रीगीतगोविन्दे अभिसारिकावर्णने साकाङ्क्षपुण्डरी-
काक्षोनाम पञ्चमः सर्गः ।

अथ विरहवर्णनव्याकुलः कविस्तयोर्मिथो मिलनकालस्मारणाजा-
तहर्षः आशिषमातनोति राधेति । देवकी श्रीयशोदा तस्य नन्द-
नस्त्वां चिरमवतु नन्दभार्य्याया द्वे नाम्नी यशोदा देवकीति चेति
पुराणसिद्धेः यतः श्रीराधाया मनोहरमुखकमलस्य मधुपः यतस्त्रैलो-
क्यमौलिस्थल्याः श्रीवृन्दावनस्यालङ्काराय योग्यं नीलरत्नम् अतएव
व्रजसुन्दरीजनस्य मनःसन्तोषाय रजनीमुखं किञ्च कंसस्य ध्वंसनाय
धूमकेतुः यतोऽवनेर्भारावतारे अन्तकः अतएव राधागमनाकाङ्क्षया
सहितः पुण्डरीकाक्षो यत्र स इति ॥ २० ॥

इति श्रीगीतगोविन्दे पञ्चमः सर्गः ।

---

## षष्ठः सर्गः ।

अथ तां गन्तुमशक्तां चिरमनुरक्तां लतागृहे
दृष्ट्वा । तच्चरितं गोविन्दे मनसिजमन्दे सखी
प्राह ॥ १ ॥

एवं प्रियतमवैकल्यश्रवणेन दशमीदशोन्मुखीमिव तामालक्ष्य अति-
व्यथा सखी पुनरागत्य श्रीकृष्णं प्राहेति तस्या वासकसज्जावस्थां

वर्णयिष्यन्नाह अथेति । अथानन्तरं तां लतागृहे दृष्ट्वा तच्चरितं गोविन्दे सखी प्राह कीदृशीं चिरमनुरक्तां यद्येवं तर्हि कथं नागच्छति गन्तुमशक्तां तर्हि कथं कृष्णो नागतः मनसिजेन प्रियार्त्तिश्रवणजमनोदुःखेन मन्दे निरुत्साहीक्रते ॥ १ ॥

गोण्डकिरीरागेण रूपकतालेन च गीयते ।

पश्यति दिशि दिशि रहसि भवन्तम् ।

त्वदधरमधुरमधूनि पिबन्तम् ।

नाथ हरे सीदति राधा वासगृहे ॥२॥ ध्रुवं॥

स्ववासकावशात् कान्तः समेष्यति निजं वपुः सज्जीकरोति गेहञ्च या सा वासकसज्जिका इति वासकसज्जालक्षणम् । गीतस्यास्य गोण्डकिरी रागः । यथा रतोत्सुका कान्तपथप्रतीक्षा सम्पादयन्ती मृदु पुष्पतल्पम् । इतस्ततः प्रेरितदृष्टिरार्त्ता श्यामा तनु र्गोण्डकिरी प्रदिष्टा ॥ रूपकतालः । तच्चरितमेवाह हे नाथ हे हरे राधावस्थामाकर्ण्यापि पशुर्वाद्विवेकशून्य इत्येकं पदं वासगृहे राधा सीदति प्रतिक्षणं विलक्षणावस्थाकुला भवति त्वय्यनुरक्ततया सन्ताप एवानुभूतस्तवेति नाथशब्दः त्वया तस्या लज्जाधैर्यादिकहरणात् हरिशब्दोऽपि निर्दिष्टः । तत् प्रकारमाह दिशि दिशि रहसि सा भवन्तमेव पश्यति त्वन्मयं जगदभूत् तथा त्वं मनसापि तां न स्मरसि इति सन्तापकत्वमेवेत्यर्थः । कीदृशं तस्या अधरस्य मधुरं यन्मधु तत् पिबन्तम् । त्वदधरेति पाठे त्वत् शब्दोऽन्यार्थः अन्याधरमधुरमपि मधूनि पिबन्तमित्यर्थः । अनेनापि लोमहर्षोत्पादकतया तथैवार्थः ॥ २ ॥

त्वदभिसरणरभसेन वलन्ती ।

पतति पदानि कियन्ति चलन्ती ॥ ३ ॥

यद्येतादृशी सा तत् कथं नागच्छतीत्याह त्वदभिसारोत्साहेन वलन्ती वलयुक्ता कियन्ति पदानि चलन्ती पतति गन्तुमसमर्थेत्यर्थः ॥ ३ ॥

विहितविशदविशकिशलयवलया ।

जीवति परमिह तव रतिकलया ॥ ४ ॥

यद्येवं तर्हि कथं जीवतीत्याह सा केवलं तव रतिकलया त्वत्कर्तृकरमणावेशेन जीवति कीदृशी कृता विशदानां मृणालानां पल्लवानाञ्च वलयाः कङ्कणानि यया सा ॥ ४ ॥

मुहुरवलोकितमण्डनलीला ।
मधुरिपुरहमिति भावनशीला ॥ ५ ॥

तत्प्रकारमाह मुहुर्वारं वारम् अवलोकितमण्डनेन यस्मिन् वर्हगुञ्जादिभिः कृतत्वत्सदृशवेशेन तयानुकृतिर्यया सा। अतएवाहं मधुरिपुरिति भावनपरा त्वन्मयात्मकस्फूर्त्त्या इत्यर्थः प्रियस्यानुकृतिर्लीलेति च नाट्यालोचनम् ॥ ५ ॥

त्वरितमुपैति न कथमभिसारम् ।
हरिरिति वदति सखीमनुवारम् ॥ ६ ॥

पुनः स्फूर्त्त्यपगमे त्वत्त आत्मानं पृथङ्मत्वा द्रुतमभिसारं हरिः कथं नोपैतीत्यनुवारं सखीं मां प्रवदति ॥ ६ ॥

श्लिष्यति चुम्बति जलधरकल्पम् ।
हरिरुपगत इति तिमिरमनल्पम् ॥ ७ ॥

पुनश्च अत्यावेशेन त्वयि च स्फुरति सति श्रीकृष्ण आगत इति मत्वा मेघतुल्यं प्रचुरमन्धकारं श्लिष्यति चुम्बति च ॥ ७ ॥

भवति विलम्बिनि विगलितलज्जा ।
विलपति रोदिति वासकसज्जा ॥ ८ ॥

पुनस्तदपगमे त्वयि विलम्बिनि सति विगलितलज्जा सती विलपति रोदिति च कीदृशी वासकसज्जावस्थां प्राप्ता ॥ ८ ॥

श्रीजयदेवकवेरिदमुदितम् ।
रसिकजनं तनुतामतिमुदितम् ॥ ९ ॥

श्रीजयदेवकवेरिदम् उदितं शृङ्गाररसभावितान्तःकरणम् अति-शयेन मुदितं करोतु । अनेन शृङ्गाररसाविष्टभक्तैरिदमास्वादनीय-मित्यर्थः ॥ ९ ॥

विपुलपुलकपालिः स्फीतशीत्कारमन्त-
र्जनितजडिमकाकुव्याकुलं व्याहरन्ती ।
तव कितव विधायामन्दकन्दर्पचिन्तां
रसजलधिनिमग्ना ध्यानलग्ना मृगाक्षी॥१०॥

स्वसख्यार्त्तिस्मरणेन अतिव्याकुला सा सेर्ष्यमिव पुनराह विपुलेति। हे धूर्त्त ! कण्ठगतप्राणां तां वनमानीय निश्चिन्तोऽसीति धूर्त्ततया सम्बोधनम्, अनल्पकन्दर्पचिन्तां हृदि कृत्वा मृगाक्षी सरलचित्ता श्रीराधा तव रससमुद्रे मग्ना बभूव चेत् समुद्रमग्ना अवलम्बनं विना कथं जीवति तवेत्यर्थाजज्ञेयं समुद्रमग्नो यथा काष्ठादिकमेवावलम्बते तथेयमप्युपायान्तराभावात् तव ध्यानलग्नेत्यर्थः ध्यानप्राप्तसङ्गमविका-रमाह विपुला रोमाञ्चपङ्क्तिर्यस्याः सा तथा स्फीतशीत्कारं यथा स्यात् तथा व्याहरन्ती अभ्यन्तरे जनितो योऽसौ जड़िमा जाड्यं तेन जाता या काकुस्तया व्याकुलमित्यपि क्रियाविशेषणं जलधिमग्नस्यापि जाड्यादयो भवन्तीत्यर्थः ॥ १० ॥

अङ्गेष्वाभरणं करोति बहुशः पत्रेऽपि सञ्चारिणि, प्राप्तं त्वां परिशङ्कते वितनुते शय्यां चिरं ध्यायति । इत्याकल्पविकल्पतल्प रचनासङ्कल्पलीलाशतव्यासक्तापि विना त्व-या वरतनुर्नैषा निशां नेष्यति ॥ ११ ॥

पुनरतिशीघ्रगमनाय तस्या वासकसज्जाचेष्टितमाह अङ्गेष्विति । श्रीकृष्णो मामेवं पश्यन् मन्दमना भविष्यतीति अङ्गेष्वाभरणं बहुशः करोति, नागत इति त्यजति पुनः करोति इत्यनेनाकल्पबाहुल्यमित्या-

कल्पः । पतत्रेऽपि पच्छादिना सञ्चारिणि सति प्राप्तमागतं त्वां परिशङ्कते अनेन विकल्पः, आगत्य श्रीकृष्णोऽत्र शयिष्यते इति शय्यां वितनुते अनेन तल्परचना, चिरं ध्यायति तव सङ्गमरसं स्मरति अनेन सङ्कल्पलीलाशतम्, इत्यनेन प्रकारेण आकल्पविकल्पतल्परचनासङ्कल्पलीलाशतव्यासक्तापि वरतनुरेषा त्वया विना निशां न नेष्यति ॥ ११ ॥

किं विश्राम्यसि कृष्णभोगिभवने भाण्डीरभूमीरुहि भ्रातर्याहि न दृष्टिगोचरमितः सानन्दनन्दास्पदम् । राधाया वचनं तदध्वगमुखान्नन्दान्तिके गोपतोगोविन्दस्य जयन्ति सायमतिथिप्राशस्त्यगर्भा गिरः ॥ १२ ॥

इति श्रीगीतगोविन्दे वासकसज्जावर्णने

धृष्टवैकुण्ठोनाम षष्ठः सर्गः ।

अथ कविः पुनरेतद्दर्शनव्याकुलस्तस्याभिसारानन्तरपूर्वचरितं कथयन्नाह किमिति । गोविन्दस्य गिरो जयन्ति श्रीराधिकाया मनोरथं पूरयन्तीत्यर्थः कीदृशस्य श्रीनन्दस्य समीपे पथिकस्य मुखात् श्रीराधिकायास्तद्वचनं गोपतः गोपयतः, किं तद्वचनं हे भ्रातः हे पथिक ! भाण्डीरनाम तरुवने किं विश्राम्यसि विश्रामं मा कुरु इत्यर्थः कथं कृष्णभोगिनः कालसर्पस्य शयनस्थाने पक्षे सम्भोगविशिष्टस्य तर्हि इदानीं क यामि नन्दस्यास्पदं गृहं किं न याहि कीदृशम् आनन्देन सह वर्त्तमानं कति दूरे इतः स्थानात् दृष्टिगोचरम् इतोदृश्यते इत्यर्थः कीदृशो गिरः सायंकाले अतिथित्वस्यैव प्राशस्त्यं प्रशंसादिरूपं तदेवगर्भोऽभिप्रायो यासां ताः अतएव धृष्टः प्रगल्भो वैकुण्ठो यत्र सः ॥ १२ ॥

इति श्रीगीतगोविन्दटीकायां षष्ठः सर्गः ।



सप्तमः सर्गः ।

अत्रान्तरे च कुलटाकुलवर्त्मपात-
सञ्जातपातक इव स्फुटलाञ्छनश्रीः ;
वृन्दावनान्तरमदीपयदंशुजालै-
र्दिक्सुन्दरीवदनचन्दनबिन्दुरिन्दुः ॥ १ ॥

पुनरुत्कण्ठिताचरितं वर्णयिष्यन् श्रीकृष्णस्यानागमनकारणमाह अत्रेति। अस्मिन्नवसरे इन्दुः किरणसमूहै र्वृन्दावनान्तरमदीपयत् कीदृशः दिक्पूर्व्वा सैव सुन्दरी तस्या वदने चन्दनबिन्दुरिवेति लुप्तोपमा पुनः कीदृशः प्रकटीभूता कलङ्कस्य श्रीः शोभा यस्मिन् अनेन चन्द्रस्य पूर्णप्रायता उक्ता अत्रोत्प्रेक्षते कुलटानां कुलस्य वर्त्म विरोधेन संजातं यत् पातकं तस्माज्जातो रोगविशेषो यस्य सः, यः खलु पातकी भवति स रोगविशेषचिह्नितो भवतीत्यर्थः ॥ १ ॥

प्रसरति शशधरबिम्बे विहितविलम्बे च
माधवे विधुरा । विरचितविविधविलापं सा
परितापं चकारोच्चैः ॥ २ ॥

तामेवावस्थामाह प्रसरतीत्यादिना सा उच्चैः कृतो नाना प्रकारो विलापो विविधशङ्कारूपो यत्र तद्यथा स्यात् तथा परितापं चकार कीदृशी कदा इत्यत आह शशधरबिम्बे प्रसरति सति माधवे च विहितविलम्बे सति विधुरा व्याकुला ॥ २ ॥

मालवरागयतितालाभ्यां गीयते ।

कथितसमयेऽपि हरिरहह न ययौ वनम् ।
मम विफलमिदममलमपि रूपयौवनम् ॥
यामि हे कमिह शरणं सखीजनवचनवञ्चिता
॥ ३ ॥ ध्रुवं ॥

यदीतापमेवाह कथितेत्यादिना । अस्यापि मालवरागयतितालौ ।

हे इति स्वागत सम्बोधनम्, इह समये कं शरणं यामि, सखीश-रणं याहि सखीजनस्य तेनाश्वासवचनेनैव वञ्चिता तर्हि समयः प्रती-च्यतां यावत् स्वयमायाति हरिः कथितसमये चन्द्रानुदयकाले यस्मात् अहह खेदे हरिर्म्मम मनोहरः मन्मनो हृत्वा इत्यर्थः वनमपि न ययौ कुतोऽत्र आगमिष्यतीत्यर्थः तस्मान्ममेदं यौवनं निर्म्मलं रूपमपि विफलं व्यर्थम् ॥ ३ ॥

**यदनुगमनाय निशि गहनमपि शीलितम् ।**
**तेन मम हृदयमिदमसमशरकीलितम् ॥४॥**

किञ्च इतस्ततो भ्रष्टास्मीत्याह यस्यानुगमनाय निरन्तरं सङ्गमाय रात्रौ वनमपि सेवितं तेन श्रीकृष्णेन हेतुना ममेदं हृदयं कामबाणेन विद्धं महत्कष्टमित्यर्थः ॥ ४ ॥

**मम मरणमेव वरमतिवितथकेतना ।**
**किमिह विषहामि विरहानलमचेतना ॥५॥**

अतो मरणमेव मम वरं श्रेष्ठं यतोऽतिवितथं व्यर्थं केतनं देहो यस्याः सा अचेतनाहं विरहानलमिह समये किमर्थं विषहामि ॥५॥

**मामहह विधुरयति मधुरमधुयामिनी ।**
**कापि हरिमनुभवति कृतसुकृतकामिनी॥६॥**

न केवलमत्र नागतइति चञ्चलचित्तोऽयं काममन्यामभिरत इ-त्याह कापि कृत सुकृतकामिनी हरिमनुभवति तेन सह केलिसुख-मित्यर्थः मां तु परमसुखरूपा वसन्तनिशा अहह खेदे विकलयति या निशा दूरस्थमपि प्रियं सङ्गमयति सैव सुकृताभावात् मां विधुरयति, कथं सा अनुभवति, कृतं सुकृतं यया सा मम तादृक् सुकृतं नास्तीत्यर्थः विधुरो विकल इति विश्वः ॥ ६ ॥

**अहह कलयामि वलयादिमणिभूषणम् ।**

हरिविरहदहनवहनेन बहुदूषणम् ॥ ७ ॥

अतोऽद्यापि अहह खेदे तत्करकल्पितवलयादिमणिभूषणं धारयामि तव कथं खेदः हरिविरह एव वह्निस्तस्य धारणेन बहूनि दूषणानि यस्य तत् देहोष्मणा दौर्ब्यादित्यर्थः। प्रियावलोकफलोहि स्त्रीणां वेष इत्युक्तेः ॥ ७ ॥

कुसुमसुकुमारतनुमतनुशरलीलया ।
स्रगपि हृदि हन्ति मामतिविषमशीलया॥८॥

किं वक्तव्यमन्यभूषणानां तत्प्रीत्यै हृदि धृतापि पुष्पमाला कामवाणविलासेन मां हन्ति तर्हि तदग्रयां सहस्रकुसुमतः सुकुमारा तनुर्यस्यास्तां तत्सहनसामर्थ्यमपि नास्तीत्यर्थः कीदृश्या अतिविषमं शीलं स्वभावो यस्यास्तया अन्योहि वाणः चतं कृत्वा व्यथयति कामवाणस्तु विध्यन्नन्तर्भिनत्तीति विषमशीलत्वम् ॥ ८ ॥

अहमिह निवसामि न गणितवनवेतसा ।
स्मरति मधुसूदनो मामपि न चेतसा ॥९॥

अहमिह निवसामि मम मूर्खतैवावशिष्टेत्याह भीतिमध्यगणय्य भयङ्करवने तत्समागमाकाङ्क्षया तिष्ठामि मधुसूदनोऽस्थिरसौहृदो मां चेतसा न स्मरति कीदृशी न गणितं वनं वेतस्य यया सा ॥ ९ ॥

हरिचरणशरणजयदेवकविभारती ।
वसतु हृदि युवतिरिव कोमलकलावती॥१०॥

हरिचरणे शरणं यस्य तस्य जयदेवकवेर्भारती हृदये वसतु भक्तानामित्यर्थः कस्मिन् केव यूनां हृदि युवतिरिव कीदृशी कोमला माधुर्य्यगुणयुक्ता पक्षे म्रदङ्गी कलावती कवित्वशालिनी पक्षे रतिकलायुक्ता ॥ १० ॥

तत् किं कामपि कामिनीमभिसृतः किम्वा
कलाकेलिभिर्बद्धोबन्धुभिरन्धकारिणि वना-

याम्यर्थी किमुद्भ्राम्यति । कान्तः क्लान्तमना मनागपि पथि प्रस्थातुमेवाक्षमः, सङ्केतीकृतमञ्जुवञ्जुललताकुञ्जेऽपि यन्नागतः ॥ ११ ॥

पूर्वोक्तं विकल्पं विवृणोति तत् किमिति । सङ्केतीकृतमनोहरे वानीरलताकुञ्जेऽपि यत् यस्मात् कान्तो न आगतस्तस्मात् किं कामपि अभिनवप्रेमबन्धुरां कामपि कामिनीमभिसृतेति शङ्कां मय्येव दृढानुरागोऽसौ कथम् अन्यामभिसरिष्यतीति वितर्कान्तरमाह किम्वा मित्रैः क्रीड़ाकौशलैर्निबद्धः कृताभिसारसमये अस्मिंस्तदपि न सम्भवतीति विचिन्त्य वितर्कान्तरमाह मामभिसरन्नीरन्ध्रतरुतया गाढ़ान्धकारिणि वनसमीपे किमु भ्राम्यति पन्थानमविदित्वेत्यर्थः चतुरशिरोमणेः सहस्रशोऽनुभूतस्थले भ्रमः कथं स्यादिति विचिन्त्य निश्चिनोति क्लान्तं मद्विशेषदुःखेन चन्द्रोदयानन्तरं तस्याः का दशा भवेदिति चिन्तया चोपतप्तं मनो यस्य सः । पथि अल्पमपि प्रस्थातु मसमर्थ एव नागत इति ॥ ११ ॥

अथागतां माधवमन्तरेण सखीमियं वीक्ष्य विषादमूकाम् । विशङ्कमाना रमितं कयापि जनार्द्दनं दृष्टवदेतदाह ॥ १२ ॥

चन्द्रोदयेन श्रीकृष्णागमनप्रतिबन्धे सति तं विना सख्या आगमने तस्या विप्रलब्धावस्थां वर्णयितुमाह अथेति । अथानन्तरं माधवं विना आगतां सखीं वीक्ष्य श्रीराधा एतद्वक्ष्यमाणमाह कीदृशीं दुःखातिशयेन वक्तुमसमर्थाम् अकृतकार्य्यत्वादित्यर्थः कीदृशं जनार्द्दनं कयापि कर्त्तृभूतया रमितं दृष्टवद्विशङ्कमाना । विप्रलब्धालक्षणं यथा अहरहरनुरागात् दूतिकां प्रेष्य पूर्वं सरभसमभिधाय क्वापि सङ्केतिकं या । न मिलति खलु यस्या वल्लभो दैवयोगात् वदति हि भरतस्तां नायिकां विप्रलब्धामिति ॥ १२ ॥

वसन्तरागयातितालाभ्यां गीयते।

स्मरसमरोचितविरचितवेशा
गलितकुसुमदरविलुलितकेशा।
कापि मधुरिपुणा विलसति युवतिरधिकगुणा
॥ १३ ॥ ध्रुवं ॥

किमेतदित्याह हे सखि कापि युवतिर्मधुरिपुणा सह विलसति यतः मत्तोऽप्यधिका गुणा यस्या इति। अधिकेत्यनेन मत्सङ्केतमागतं तं वशीकृत्य विलसतीति गुणाधिक्यं तेन सह इत्यनेन तत्कर्त्तृकरणञ्च ध्वनितम्। गुणानेवाह स्मरेत्यादिना कामसंग्रामस्य बाहुयुद्धस्य उचितो विरोचितवेशो यया सा। ततश्च रणावेशेन गलितानि कुसुमानि येभ्यस्ते दरविगलिताः केशा यस्याः सा अनेन लीलाविशेषः सूचितः ॥ १३ ॥

हरिपरिरम्भणवलितविकारा।
कुचकलसोपरि तरलितहारा ॥ १४ ॥

न केवलमेवं किञ्च हरेः परिरम्भणेन बलितो रचितो रोमाञ्चादि विकारो यस्याः सा ततश्च कुचकलसयोरुपरि तरलितश्चञ्चलितो हारो यस्याः सा। अनेनापि लीलाविशेषः सूचितः ॥ १४ ॥

विचलदलकललिताननचन्द्रा।
तदधरपानरभसकृततन्द्रा ॥ १५ ॥

तया तत्सम्भ्रमशिरोधूननेन विचलदलकैर्ललितः सुन्दर आननचन्द्रो यस्याः सा, ततश्च कृष्णस्याधरपानरभसेन कृता तन्द्रा आनन्दनिमीलनं यया सा ॥ १५ ॥

चञ्चलकुण्डलललितकपोला।
मुखरितरसनजघनगतिलोला ॥ १६ ॥

तथा तदधरपानावेशात् चञ्चलाभ्यां कुण्डलाभ्यां ललितौ कपोलौ यस्याः सा, किञ्च मुखरिता रसना यत्र तस्य जघनस्य गत्या लोला चञ्चला ॥ १६ ॥

दयितविलोकितलज्जितहसिता ।
बहुविधकूजितरतिरसरसिता ॥ १७ ॥

ततश्च दयितस्य विलोकितेन वीक्षणेन लज्जिता हसिता च तथा बहुविधं दात्यूह पारावतादि कूजितवत् रतिरसे रसितं ध्वनितं यया सा ॥ १७ ॥

विपुलपुलकपृथुवेपथुभङ्गा ।
श्वसितनिमीलितविकसदनङ्गा ॥ १८ ॥

अतएव विपुलाः पुलकाः पृथु वेपथुश्च तेषां भङ्गास्तरङ्गा यस्याः सा, तथा श्वसितनिमीलिताभ्यां पुनर्व्विकसन् आविर्भवन् अनङ्गो यस्याः सा ॥ १८ ॥

श्रमजलकणभरसुभगशरीरा ।
परिपतितोरसि रतिरणधीरा ॥ १९ ॥

तथा श्रमजलकणभरेण सुन्दरं कलेवरं यस्या सा तथा निःसहता विस्मृतस्वाङ्गानुसन्धानतया प्रियस्य वक्षसि परिपतिता यतः सुरत-संग्रामे पण्डिता ॥ १९ ॥

श्रीजयदेवभणितहरिरमितम् ।
कलिकलुषं जनयतु परिशमितम् ॥ २० ॥

श्रीजयदेवभणितं हरेरमितं विक्रीड़ितं कलिकलुषं कामादिकं शमितं जनयतु नाशयत्वित्यर्थः । एतत् सर्व्वं स्वस्यां तत्पूर्व्वाचरित-स्फूर्त्त्याऽऽर्त्तिजया ईर्ष्यया अन्यत्रारोपितमिति ज्ञेयम् ॥ २० ॥

विरहपाण्डुमुरारिमुखाम्बुज-
द्युतिरयं तिरयन्नपि वेदनाम् ।
विधुरतीव तनोति मनोभुवः
सुहृदये हृदये मदनव्यथाम् ॥ २१ ॥

अथ चन्द्रं पश्यन्ती तं श्रीकृष्णमुखत्वेनोद्भाव्य तत्र अन्यया सह वर्त्तमानस्यापि मद्विरहेण पाण्डुत्वस्फूर्त्त्या स्वस्मिन् तस्यातिप्रणयितां स्मरन्ती चन्द्रमाक्षिपति विरहेति। अयं विधुः सन्तप्तानां वेदनां तिरयन् नाशयन्नपि मम हृदये अये खेदे मदनव्यथाम् अतीव तनोति कथं तदाह अन्यया सह रममाणस्यापि मद्विरहे पाण्डुरन्मुरारिमुखाम्बुजं तद्वत् द्युतिर्यस्य सः वेदनां नाशयन्नपि कुतस्तां व्यथयति मनोभुवः सुहृत् मदनस्तत्र तं व्यथयति मदनसुहृत्त्वेन तन्मुखस्मारकतया चन्द्रो मां व्यथयतीत्यभिप्रायः। अये कोपे विषादे चेति विश्वः॥२१॥

गुज्जरीरागैकतालीतालाभ्यां गीयते।

समुदितमदने रमणीवदने चुम्बनवलिताधरे। मृगमदतिलकं लिखति सपुलकं मृगमिव रजनीकरे॥ रमते यमुनापुलिनवने विजयी मुरारिरधुना॥ २२॥ ध्रुवं॥

पुनस्तस्या एव स्वाधीनभर्त्तृकात्वसूचनपूर्व्वकं तल्लीलाविशेषमाह समुदितेत्यादिना। अस्यापि गुज्जरीरागैकतालीतालौ। यमुनायाः पुलिनस्थवने मधुरिपुरधुना क्रीड़ति कीदृशः विजयी खण्डनादि कौशलेन सर्व्वातिशायी। रमणप्रकारमाह रमण्या वदने सपुलकं यथास्यात् तथा मृगमदतिलकं लिखति, कस्मिन् कमिव चन्द्रे मृगमिव अत्र मुखस्य चन्द्रेण तिलकस्य मृगेण साम्यम्। कीदृशे सम्यगुदितः कामो यस्मात् तस्मिन् अर्थात् तस्यैव। चन्द्रपक्षे तथैवार्थः सर्व्वेषामिति विशेषः चन्द्रोदये कामोद्दीपनात्। पुनः कीदृशे वदनपक्षे तिलकं लिखित्वा साध्विदं वदनमित्युक्त्वा चुम्बनाय वलितो विन्यस्तो अधरो यत्र, चन्द्रपक्षे चुम्बनेन वलितो युक्तोऽधरो यस्मादित्यर्थः॥ २२॥

घनचयरुचिरे रचयति चिकुरे तरलिततरुणानने। कुरुवककुसुमं चपलासुषमं रतिपतिमृगकानने॥ २३॥

न केवलं तिलकं चिकुरे रक्तझिण्टीपुष्पञ्च रचयति तत्पुष्पैः कवरीं यथातीत्यर्थः कीदृशं चपलाया विद्युतइव सुषमा परमा शोभा यस्य तस्मिन्, पुनः कीदृशे मेघपुञ्जवत् सुन्दरे अतएव तत्गुणवर्णनेन मुखरीकृतं तरुणस्य श्रीकृष्णस्य आननं येन तत्र, यतो रतिपतिरेव मृगत्वेन सदाश्रितत्वात् तस्य कानने ॥ २३ ॥

घटयति सुघने कुचयुगगगणे मृगमद-
रुचिरूषिते । मणिमयममलं तारकपटलं
नखपदशशिभूषिते ॥ २४ ॥

तथा कुचयुगगगणे मणिसरमेव तारकपटलं योजयति, मणिसरो मुक्ताहारः असमस्तरूपकमिदं कुचयुगमेव गगणं दृढत्वात् कीदृशे सुनिविड़े गगणपक्षे शोभनमेघयुक्ते तथा मृगमदरुचिभिर्म्रक्षिते गगणपक्षे कस्तूरीदीप्तैरव म्रक्षिते किञ्च नखाङ्कएव शशी तेन भूषिते ॥ २४ ॥

जितविशशकले मृदुभुजयुगले करतल-
नलिनीदले । मरकतवलयं मधुकरनिचयं
वितरति हिमशीतले ॥ २५ ॥

अपरञ्च मृदुभुजयुगले मरकतवलयमेव मधुकरनिचयं वितरति अर्पयति, कीदृशे जितानि मृणालखण्डानि येन तस्मिन्, करतलमेव नलिनीदलं यत्र तस्मिन्, अतएव हिमवच्छीतले सम्भोगिण्याः काम-तापराहित्यादित्यभिप्रायः मृणाले भ्रमरार्पणेनाद्भुत कुञ्जलम् ॥ २५ ॥

रतिगृहजघने विपुलापघने मनसिजकन-
कासने । मणिमयरसनं तोरणहसनं विकि-
रति कृतवासने ॥ २६ ॥

तथाच रतेर्गृहे आश्रये जघने मणिसारसनं निक्षिपति तत्स्पर्श-जातकम्पतया अयथातथं विन्यस्यतीत्यर्थः कीदृशं तोरणस्य माङ्गल्य-

स्रजो हसनमुपहासो यस्मात् तत्, कीदृशे विस्तीर्णमपघनमङ्गं यस्य तस्मिन्, तथा कामस्य स्वर्णपीठे, अतः कृता श्रीकृष्णस्य लीलाविशेषवासना येन तस्मिन् ॥ २६ ॥

चरणकिशलये कमलानिलये नखमणिगणपूजिते । वहिरपवरणं यावकभरणं जनयति हृदि योजिते ॥ २७ ॥

तथा वक्षसि धृते चरणपल्लवे यावकाभरणं वहिरावरणं करोति, यतः श्रियोनिवासः अतो नखा एवमणिगणा स्तैः पूजिते, श्रीनिवासस्य मणियुतस्यच वहिरावृतिर्युक्तैवेत्यर्थः ॥ २७ ॥

रमयति सुभृशं कामपि सुदृशं खलहलधरसोदरे । किमफलमवसं चिरमिह विरसं वद सखि विटपोदरे ॥ २८ ॥

किञ्च परवञ्चके हलधरस्याविदग्धस्य सोदरे सदृशे श्रीकृष्णे कामपि सुदृशं सुभृशं यथा स्यात् तथा रमयति सति इह वनमध्ये विरसं विफलं यथा स्यात् तथा किमहमवसमित्येतत् सखि वद मामभिसार्य्य अन्ययासह रमणाद्धरेः खलत्वम् ॥ २८ ॥

इह रसभणने कृतहरिगुणने मधुरिपुपदसेवके । कलियुगचरितं न वसतु दुरितं कविनृपजयदेवके ॥ २९ ॥

इहैतत् काव्यकर्त्तरि कवीनां नृपे जयदेवके कलियुगचरितं दुरितं न वसतु । कुतः यतोमधुरिपोः पदसेवके अतएव कृतं हरेर्गुणां चिन्तनं येन तस्मिन् तत्रापि रसस्य शृङ्गाररसस्य भणनं कथनं यत्र तस्मिन् हृद्रोगम् आशु अपहिनोतीत्युक्तेः ॥ २९ ॥

नायातः सखि निर्दयो यदि शठस्त्वं दूति किं दू-

यसे, स्वच्छन्दं बहुवल्लभः स रमते किं तत्र ते दूषणम् । पश्याद्य प्रियसङ्गमाय दयितस्याकृष्यमाणं गुणैरुत्कण्ठार्त्तिभरादिव स्फुटदिदं चेतः स्वयं यास्यति ॥ ३० ॥

अथ श्रीकृष्णस्य अनागमनेन विषण्णवदनां सखीं प्रति अतिनिर्व्वेदमाह नायात इति । हे सखी हे दूति ! सखी भूत्वापि मन्नीत्यै दौत्यकर्म्मणि प्रवृत्ते ! दयारहितः निःशोकाश्रयप्राणरक्षापराङ्मुखः शठोऽन्तरन्यत् वहिरन्यत्कारी यदि नायातः तर्हि त्वं किं दूयसे मा व्यथस्वेति, शठतामाह बहुवल्लभः स निःशङ्कं रमते तत्र कार्य्ये ते तव किं दूषणं न किमपि इत्यं सखीमनूद्य निर्व्वेदभङ्ग्या आत्मनो दशमीदशामाह पश्याद्येदानीमेव दयितस्य मिलनाय इदं तदप्राप्तितापोन्मूलितधैर्य्यं मम चेतः स्वयं यास्यति, केन प्रकारेण तदाह उत्कण्ठाया आधिक्येन स्फुटदिव, तदपि कथं गुणैराकृष्यमाणम् अन्योपि रज्ज्वाकृष्टः सन् यातीत्यर्थः श्लिष्टगुणशब्दोक्तिर्विषयाविरोधिलक्षणायैव दयितशब्दोऽपि तथा ॥ ३० ॥

देशवराड़ीरागरूपकतालाभ्यां गीयते ।

अनिलतरलकुवलयनयनेन
तपति न सा किशलयशयनेन ।
सखि या रमिता वनमालिना ॥ ३१ ॥ ध्रुवं ॥

तद्गुणैरन्यस्याः सुखं वर्णयन्ती स्वस्यास्तदलाभात् निर्व्वेदेन श्लोकार्थमेव निश्चिनोति अनिलेत्यादिना । अस्यापि देशवराड़ीरागरूपकतालौ । हे सखि या वनमालिना रमिता विविधसम्भोगकेलिभिर्नन्दिता सा किशलयशयनेन न तपति पल्लवशय्यायां सुखयत्येवेत्यर्थः एवं सर्व्वत्र योज्यं कीदृशेन अनिलेन तरले ये नीलोत्पले तद्वन्नयने यस्य तेन उत्पलवत् शैत्यगुणेन तापोपशमनादिति भावः ॥ ३१ ॥

विकसितसरसिजललितमुखेन ।
स्फुटति न सा मनसिजविशिखेन ॥ ३२ ॥

या रमिता वनमालिनेति सर्वत्र योज्यम् । विकसितसरसिजवत् सुन्दरं मुखं यस्य तेन या रमिता सा कामशरेण विद्धा न भवति अहमेव तेन विद्धास्मीति भावः ॥ ३२ ॥

अमृतमधुरमृदुतरवचनेन ।
ज्वलति न सा मलयजपवनेन ॥ ३३ ॥

अमृतादपि मधुरतरमतिकोमलञ्च वचनं यस्य तेन या रमिता सा मलयजपवनेन न ज्वलति अहमेव तेन ज्वलितास्मीति अमृतसिक्ताया ज्वालातिशयानुपपत्तेरिति भावः ॥ ३३ ॥

स्थलजलरुहरुचिकरचरणेन ।
लुठति न सा हिमकरकिरणेन ॥ ३४ ॥

स्थलकमलवद्रुचिरौ करौ चरणौच यस्य तेन या रमिता सा चन्द्रस्य किरणेन भूमौ न परिवर्त्तते अहमेव ज्वालबन्धप्रविष्टेव तस्मात्त्वि स्थलकमलवत् शीतलकरचरणस्पर्शसुखेन उज्ज्वलतया इन्दुकिरणानां तापकत्वावगमादिति भावः ॥ ३४ ॥

सजलजलदसमुदयरुचिरेण ।
दलति न सा हृदि विरहभरेण ॥ ३५ ॥

सजलजलदानां समूहादि रुचिरेण या रमिता सा विरहभरेण हृदि न विदीर्य्यते जलदवदार्द्रतया विदारासम्भवादिति अहमेव तेन विदीर्णहृदयास्मीति भावः ॥ ३५ ॥

कनकनिकषरुचिशुचिवसनेन ।
श्वसिति न सा परिजनहसनेन ॥ ३६ ॥

कनकस्य निकषपाषाणेषु या रुचिस्तद्वद्वसनं यस्य, तेन या रमिता सा परितो जनानां छलनेन न श्वसिति सौभाग्यगर्वेण काश्चिदपि न गणयतीत्यर्थः अहमेव तत्परिहासैर्निश्वासयुक्तास्मीति भावः ॥ ३६॥

सकलभुवनजनवरतरुणेन ।
वहति न सा रुजमतिकरुणेन ॥ ३७ ॥

सकलभुवनेषु ये जना युवानस्तेभ्यो वरः श्रेष्ठो यः किशोरस्तेन या रमिता सा अतिकरुणारसेन पीड़ां न प्राप्नोति जगद्दल्लभतरुणप्राप्तायाः करुणानुपपत्तिरिति अहमेव रोदनादिना सखीं कदर्थयामि ॥ ३७॥

श्रीजयदेवभणितवचनेन ।
प्रविशतु हरिरपि हृदयमनेन ॥ ३८ ॥

अनेन श्रीजयदेवभणितेन श्रीराधाया माधवमुद्दिश्यवचनेन हरिरपि हृदयं प्रविशतु, प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुह मित्युक्तेः ॥ ३८ ॥

मनोभवानन्दन चन्दनानिल प्रसोद रे दक्षिण मुञ्च वामताम् । क्षणं जगत्प्राण विधाय माधवं पुरो मम प्राणहरोभविष्यसि ॥ ३९ ॥

अत्यावेशेन मनोवाष्पमुञ्चिरति दैन्येनादौ सविनयमाह हे मनोभवस्यानन्ददायक चन्दनानिल परोपकारिन्नित्यर्थः प्रसन्नोभव पुनरौव्योदयादेतदाह रे दक्षिण सर्व्वानुकूल वामतां प्रतिकूलतां मुञ्च दक्षिणपथप्रवृत्तस्य वामपथप्रवृत्तेरयुक्तत्वाद्वामता त्याज्या इत्यर्थः । तर्हि किं विधेयं तत्राह हे जगत्प्राण जगद्धितोऽपि त्वं मनोभवानन्दनाव चन्दनतरुसम्पर्कात् विषमस्त्रेम्मां मारयसि तदा क्षणमपि माधव पुरः कृत्वा पश्चान्मम प्राणहरो भविष्यसि ॥ ३९ ॥

रिपुरिव सखीसम्वासोऽयं शिखीव हिमानिलो-
विषमिव सुधारश्मिर्यस्मिन् दुनोति मनोगते।
हृदयमदये तस्मिन्नेवं पुनर्वलते बलात्
कुवलयदृशां वामः कामो निकामनिरङ्कुशः॥४०॥

अथ नीरागे दयिते सानुरागं चित्तं निन्दति ममैवायमपराधो नान्यस्येत्याह रिपुरिति। यस्मिन् हरौ चित्तारूढ़ेऽपि सखीभिः सहैकत्र वासोपि रिपुरिव दुनोति स्वच्छन्दगमनप्रतिरोधकत्वात् शीतलवायुरप्यग्निरिव तापकत्वात् चन्द्रोपि विषमिव दाहकत्वात् तस्मिन्निर्दयेकान्ते पुनर्यदि हृदयमेवमुक्तप्रकारेण वार्य्यमानमपि बलात् संभक्तं स्यात्तर्हि स्त्रीणामभिलाषः अत्यर्थमयन्त्रितः अतोवामः प्रतिकूलएव हिताहितविचारापगमात् ॥ ४० ॥

बाधां विधेहि मलयानिल पञ्चवाण
प्राणान् गृहाण न गृहं पुनराश्रयिष्ये।
किन्ते कृतान्तभगिनि क्षमया तरङ्गै-
रङ्गानि सिञ्च मम शाम्यतु देहदाहः॥४१॥

संप्रति विरहोत्पन्ना प्राणोत्सर्गं कृतमेवाह बाधामिति। हे मलयानिल! पीड़ां विदेहि कुरु विषयत्वेन बाधाविधानसामर्थ्यात् हे पञ्चवाण प्राणान् गृहाण पञ्चवाणधारित्वे पञ्चप्राणग्रहणयोग्यत्वात् हे यमस्य भगिनि ते क्षमया किं त्वं कथं क्षमसे यमानुजायाः क्षमा न युक्ता तर्हि किं कर्त्तव्यं तरङ्गैरङ्गानि सिञ्च तेन किं स्यात् मम देहदाहः शाम्यतु दशमीं दशां विधेहीत्यर्थः क्षणेन चेदुपेक्षितासि तर्हि गृहमेव किं न यासि न गृहं पुनराश्रयिष्ये तेन विना गृहमपि सन्तापकमेव स्यादतोमरणं युक्तमित्यर्थः ॥ ४१ ॥

प्रातर्नीलनिचोलमच्युतमुरः संवीतपीतांशुकं।
राधायाश्चकितं विलोक्य हसति स्वैरं सखीमण्डले

व्रीडाचञ्चलमञ्चलं नयनयोराधाय राधानने
स्मेरस्मेरमुखोऽयस्तु जगदानन्दाय नन्दात्मजः॥४२

इति श्रीगीतगोविन्दे विप्रलब्धावर्णने नागरनारायणो नाम सप्तमः सर्गः ।

अथैतत् दुःखवर्णनसहिष्णुः कविः सिंहावलोकनन्यायेन साधारणकेलिरात्रेः प्रातश्चरितवर्णनेन श्रीराधिकायाः खण्डितावस्थां वर्णयिष्यन् श्रीराधामाधवयोः प्राक्तन केल्यनन्तरावस्थितिमाह प्रातरिति। नन्दात्मजो जगदानन्दायास्तु कीदृशः स्वच्छन्दं यथा स्यात् तथा सखीमण्डले हसति सति व्रीडाचञ्चलं नयनयोरञ्चलं राधानने आधाय स्मेरमुखः कुतः सखीहासः प्रभाते अच्युतं नीलनिचोलं चकितं वीक्ष्य श्रीराधाया उरश्च सम्वीतमुत्तरीकृतं पीतांशुकं यत्र एतादृशं वीक्ष्य। अतः सर्गोयं नागरा एव नरा नरसमूहा स्तेषामयनं स मूलभूतं यः श्रीकृष्णो यत्र इति ॥ ४२ ॥

इति श्रीगीतगोविन्दटीकायां सप्तमः सर्गः ।



## अष्टमः सर्गः ।

अथ कथमपि यामिनीं विनीय
स्मरशरजर्ज्जरितापि सा प्रभाते ।
अनुनयवचनं वदन्तमग्रे
प्रणतमपि प्रियमाह साभ्यसूयम् ॥ १ ॥

खण्डितावस्थामेव वर्णयति अथेत्यादिना। खण्डितालक्षणं यथा उल्लङ्घ्य समयं यस्याः प्रेयानन्योपभोगवान्। भोगलक्ष्माङ्कितः प्रातरागच्छेत् सा हि खण्डितेति। अथ बहुविधप्रलापानन्तरं हरिविरहवर्णनोपदर्शक ललितलवङ्गेत्यादि सखीवचनश्रवणेन सञ्चरदधरेत्यादि स्वमनोरथकथनेन च अतिकष्टेन रात्रिं नीत्वा सा श्रीराधा प्रभाते प्रणतमपि प्रियं साभ्यसूयं अभितः असूयया सहितं यथास्यात्तथा आह कीदृशी स्मरशरेण जर्ज्जरिता क्षणमात्रमतिवाहयितुम् अशक्तापि, कीदृशम् अग्रे अनुनयवचनं स्वापराधजनितकोपोपशमनवाक्यं वदन्तं ततोऽपि प्रसादमनालोच्य प्रणतम् अनेन प्रेम्णाः पराकाष्ठा दर्शिता कण्ठगतप्राणाया अपि प्रियदर्शनमात्रेनासूयोदयात् ॥ १ ॥

भैरवीरागयतितालाभ्यां गीयते।

**रजनिजनितगुरुजागररागकषायितमलसनिमेषं**
**वहतिनयनमनुरागमिवस्फुटमुदितरसाभिनिवेशं**
**हरिहरि याहिमाधवयाहिकेशवमावदकैतवादं।**
**तामनुसर सरसीरुहलोचन या तव हरति**
**विषादम् ॥ २॥ ध्रुवम् ॥**

गीतस्यास्य भैरवीरागयतितालौ यथा। सरोवरस्थे स्फाटिकस्य मण्डपे सरोरुहैः शङ्करमर्च्चयन्ती। तालप्रयोगे प्रतिबद्धगीता गौरीतनुर्नारद भैरवीयमिति॥ हरिहरीति खेदे हे माधव हे केशव! त्वं याहि इतोगच्छ, का यामि हे सरसीरुहलोचन चक्षुःप्रीतिमात्रेण मुग्धस्त्रीजनवञ्चन! या त्वत्तोपि वञ्चनचतुरा सहजप्रेमानभिज्ञस्य तव विषादं कापट्यापादितवैमनस्यं हरति तां चित्तानुरूपचतुरव्यापाराम् अनुगच्छ लोटप्रयोगः तत्स्फूर्त्तिसम्भावनया माधवेति धवो न भवसीत्यनियतप्रियत्वं केशवेति प्रकष्टकेशदारोन्मुक्तकेशत्वं सरसीरुहलोचनेत्यर्द्धमुद्रितनेत्रत्वञ्च ध्वनितं त्वदेकपरायणोऽहमिति वदन्तं कपटवादं मा वद न कैतवं ब्रूहि सत्यमेव नान्याङ्गनासङ्ग-

तोऽहमिति प्रतिवचनमाशङ्क्याह रजनिजनितेन गुरुजागररागेण कषायितं लोहितीकृतं तव नयनम् अनुरागं वहतीत्युत्प्रेक्षे तां प्रत्यनुरागप्राचुर्यात् तव हृदि स्थितमरविन्दचक्षुषा निर्गतमित्युत्प्रेक्षार्थः सहजमेवारुणं मे नयनं न जागरादित्याह अलसेन निमीलनं यत्र तत् अनुभूतत्वद्वचनचिन्तया निमीलिते लोचने न जागरादिति कथितो रसस्याभिनिवेशो येन तत् यदि त्वं नान्याङ्गनासङ्ग तर्हि कथमेतदित्यर्थः अग्रेप्येवमुन्नेयम् ॥ २ ॥

कज्जलमलिनविलोचनचुम्बनविरचितनीलिमरूपम् । दशनवसनमरुणं तव कृष्ण तनोति तनोरनुरूपम् ॥३॥

तच्चिन्ताजागरान्नेत्रे रागः न रतिरागादित्याह हे कृष्ण ! सहजारुणं तव दशनवसनम् अधरः संप्रति तनोरनुरूपम् अनु सादृश्ये सदृशरूपं श्यामतामित्यर्थः तनोति कुतोऽनुरूपं कज्जलेन मलिनयोर्विलोचनयोश्चुम्बनेन विरचितं नीलिमरूपं यत्र तत् मलिनशब्दस्त्रीर्ष्यया तवाधर चरितं व्यनक्तीत्यर्थः ॥ ३ ॥

वपुरनुहरति तव स्मरसङ्गरखरनखरक्षतरेखम् । मरकतशकलकलितकलधौतलिपेरिव रतिजयलेखम् ॥ ४॥

तच्चिन्ताशोकेन मलिनोऽयमधरो न नारीचुम्बनादित्याह तवेदं वपुः रतिजयलेखमनुहरति सदृशी करोति कीदृशम् अनङ्गबाणतीक्ष्णा नखक्षतरूपा रेखा यत्र तत् कस्यादिव मरकतमणिखण्डे अर्पितायाः काञ्चनद्रवलिखिताक्षरपङ्क्तिरिव वपुषः कृष्णत्वात् नखक्षतस्य रक्तत्वात् मरकतार्पितलिपेः साम्यम् ॥ ४ ॥

चरणकमलगलदलक्तसिक्तमिदं तव हृदयमुदारं । दर्शयतीव बहिर्मदनद्रुमनवकिसलयपरिवारं ॥५॥

तवान्वेषणे भ्रमणाद्वने ममेदं वपुः कण्टकैः क्षतं न नारीनखै-रित्यत सोल्लुण्ठमाह इदं विद्यमानं तव हृदयम् उदारं मनोहरं दर्शनीयमित्यर्थः औदार्य्यमेवाह प्रेमोल्लासतो हृदि धृतचरणकमलगल-दलक्तकेन सिक्तं श्यामे उरसि अरुणयावकेन शोभितमित्यर्थः । तत्तो-मेचे मदनद्रुमस्य हृदयानुगतनवपल्लवसमूहं वहिर्दर्शयतीव ॥ ५

दशनपदं भवदधरगतं मम जनयति चेतसि खेदम् । कथयति कथमधुनापि मया सह तव वपुरेतदभेदम् ॥ ६ ॥

गैरिकचित्रितं नान्याङ्गनाचरणालक्तकसिक्तमित्याह हे श्रीकृष्ण ! एतत् प्रत्यक्षं तव वपुः कर्तृ अधुनापि मया सह ऐक्यं नावयोर्भेद इति कथं कथयति तत्कथनप्रकारमाह तवाधरगतं दशनक्षतं मम चेतसि खेदं दुःखं जनयति इति भङ्ग्योक्तिः । त्वदधरस्थि-तस्य मच्चित्तव्यथाजनकत्वात् अभेदोऽज्ञायत इत्यर्थः । नयनारुणादिकं छद्मनाच्छादितमिदन्तूदितचन्द्रकलावत् प्रकाशमानमितिभावः ॥ ६ ॥

वहिरिव मलिनतरं तव कृष्ण मनोऽपि भवि-ष्यति नूनम् । कथमथ वञ्चयसे जनमनुगतस-मशरज्वरदूनम् ॥ ७ ॥

सौरभलुब्धभ्रमरेण दष्टोऽयमधरो नान्याङ्गनाचुम्बनत इत्याह हे कृष्ण ! मलिनात्मकं तव मनोपि वहिरिव मलिनतरं भविष्यतीति नूनमुत्प्रेक्षे कथं प्रश्ने अव्ययानामनेकार्थत्वात् अथशब्दोऽन्यथावाची कथमन्यथा कामशरज्वरपीड़ितमनुगत मनुकूलं जनं वञ्चयसे शुद्धा-न्तःकरणस्य नेयं रीतिरित्यर्थः ॥ ७ ॥

भ्रमति भवानवलाकवलाय वनेषु किमत्र विचित्रं। प्रथयति पूतनिकैव वधूवधनिर्दयवालचरित्रं ॥ ८ ॥

न वञ्चयाम्यहं त्वमेव मुधा शङ्कसे इत्याह भवान् अबलाग्रासाय कान्तावधाय वनेषु भ्रमति अत्र किं विचित्रं न किमपीत्यर्थः अतो-

दाहरणमाह स्त्रीबधे तत्र निर्द्दयबाल्यचरितं पूतनिकैव कियत् प्रथयति विस्तारयति नतु सर्व्वं, बाल्ये चेदेवं तदधुना कैशोरे किं चित्रमिति भावः ॥ ८ ॥

श्रीजयदेवभणितरतिवञ्चितखण्डितयुवतिविलापं
शृणुत सुधामधुरं विबुधा विबुधालयतोऽपि
दुरापम् ॥ ९ ॥

हे विबुधाः ! श्रीकृष्णमधुरलीलास्वादनचतुराः ! श्रीजयदेवभणितं रतिवञ्चितायाः खण्डिताया युवत्याः श्रीराधाया विलापं यत्र तत् शृणुत, यतः सुधायाअपि मधुरम् अतएव विबुधालयतोऽपि स्वर्गा-दपि दुर्लभं सम्भाव्यास्तिविः राधाकृष्णोपासनालभ्यत्वात् तत्रेदं नास्ती-तिभावः ॥ ९ ॥

तवेदं पश्यन्त्याः प्रसरदनुरागं वहिरिव
प्रियापादालक्तच्छुरितमरुणच्छायहृदयम् ।
ममाद्य प्रख्यातप्रणयभरभङ्गेन कितव [ ॥ १० ॥
त्वदालोकः शोकादपि किमपि लज्जां जनयति

तथैव पुनराह तवेति । हे कितव ! त्वदालोकोऽपि त्वदागमन-प्रतीक्षिण्याः मम प्रसिद्धप्रेमातिशयभङ्गेन त्वद्वियोगदुःखादप्यनिर्वच-नीयां जीवनमरणयोः सन्देहापादिकां लज्जां जनयति, कुतोलज्जा-जननं तवेदमरुणद्युति हृदयं पश्यन्त्याः ततोपि कुतः प्रियायास्तस्याः पादालक्तेन व्याप्तं, तत्रोत्प्रेक्षते प्रसरदनुरागं वहिर्गतमिव प्रवृद्धिं गच्छन्ननुरागो हृदयं भित्त्वा बहिर्निर्गत इत्यर्थः ॥ १० ॥

अन्तर्म्मोहनमौलिघूर्णनचलन्मन्दारविस्रंसन-
स्तब्धाकर्षणदृष्टिहर्षणमहामन्त्रः कुरङ्गीदृशाम् ।
दृप्यद्दानवदूयमानदिविषद्दुर्व्वारदुःखापदां

ध्वंशः कंसरिपोर्व्यपोहयतु वः श्रेयांसि वंशीरवः ॥ ११ ॥

इति श्रीगीतगोविन्दे खण्डितावर्णने विलक्षलक्ष्मीपतिर्नाम अष्टमः सर्गः ।

अथ श्रीराधिकाया अतिगाढ़माननिर्बन्धमभिप्रेत्य आत्मप्रयत्न-शिथिलेऽपि वंशीसाहाय्येनावश्यं मनोऽपयास्यतीति सखी तदनुनये प्रवर्त्तयिष्यतीति स्मरन् कविर्वंशीध्वनिं वर्णयन्नाशिषमातनोति अन्तरिति। कंसरिपोर्वंशीरवो वो युष्माकं श्रेयांसि व्यपोहयतु विगततापान् करोतु नित्यं ददात्वित्यर्थः। कीदृशः कुरङ्गीदृशां मनोमोहने मौलिघूर्णने चलन्मन्दारकुसुमानां विस्रंसने स्तम्भने आकर्षणे दृष्टिहर्षणे वशीकरणे महामन्त्रः, कीदृशः दर्पयुक्तैर्दानवैर्दूयमानानां देवानामनिवार्य्य दुःखपङ्क्तीनां ध्वंसो स्रंसनरूपः नाशकइत्यर्थः यत्-श्रवणमात्रेण देवादैत्यभयान्मुच्यन्तीति भावः। अतएव विलक्षो गाढ़मानविशोकादिस्मयान्वितो लक्ष्मीपतिः श्रीराधापतिर्यत्र स इति ॥ ११ ॥

इति श्रीगीतगोविन्दटीकायाम् अष्टमः सर्गः।

---

## नवमः सर्गः ।

तामथ मन्मथखिन्नां रतिरसभिन्नां विषादसम्पन्नाम्। अनुचिन्तितहरिचरितां कलहान्तरितामुवाच रहः सखी ॥ १ ॥

अथ प्रणत्यापि मानानपगमात् उपेक्षया आह हरौ अन्तर्हिते सति अन्तरुत्सुकामपि बहिर्मानावकुण्ठितामालक्ष्य सखी प्राह ताम-

घेति । अथ कृष्णान्तर्द्धानानन्तरं श्रीराधां सखी रह एकान्ते उवाच, कीदृशीं मन्मथेन खिन्नां यतः कलहान्तरितां तदवस्थां प्राप्ताम् अतएव रतिरसेन खण्डिताम् अतो विषादयुक्ताम् अतोऽनुवारं चिन्तितं हरिचरितं चाटूक्तिपादप्रपतनादि यया ताम् । या सखीनां पुरः पादपतितं वल्लभं रुषा । निरस्य पश्चात्तपति कलहान्तरिता हि सेति । प्राणेश्वरं प्रणयकोपभरेण भीतं या चाटुकारमचिरादवतीर्य्य गर्व्वात् । सन्तप्यते मदनवह्निशिखासहस्रै र्व्यासाकुला तु कलहान्तरिता हि सा स्यादिति च कलहान्तरिता लक्षणम् ॥ १ ॥

रामक्रिरीरागयतितालाभ्यां गीयते ।

हरिरभिसरति वहति मृदुपवने ।
किमपरमधिकसुखं सखि भवने ॥
माधवे मा कुरु मानिनि मानमये ॥ २॥ ध्रुवं ॥

अस्यापि रामकिरीरागयतितालौ । किमुवाचेत्याह माधवेत्यादिना । अये इति सम्बोधनं हे मानिनि माधवे मानं मा कुरु माधव इति मधुवंशोद्भवे श्रिया महासम्पत्तेः पत्यौ चेति मानानर्हत्वमुक्तम् । कथं वस्तुकेऽस्मिन् मानो न विधेय इत्याह मृदुपवने वहति सति हरिरभिसरति सति च हे सखि ! भवनेऽपरं सुखं किमस्ति माधवाभिसरणादन्यद सुखं नास्तीत्यर्थः ॥ २ ॥

तालफलादपि गुरुमतिसरसम् ।
किं विफलीकुरुषे कुचकलसम् ॥ ३ ॥

सुखमस्तु तेन मम किमिति चेत् स्तनाभ्यामाभ्यां किमपराद्धमिति सोत्प्रासमाह कुचकलसं किमर्थं विफलीकुरुषे यतस्तालफलादपि गुरुं श्रेष्ठं तथा सरसं रसशास्त्रोक्तलक्षणसहितम् अतस्तदनुभवं विना अस्य विफलीकरणं न युक्तमित्यर्थः ॥ ३ ॥

कति न कथितमिदमनुपदमचिरम् ।
मा परिहर हरिमतिशयरुचिरम् ॥ ४ ॥

त्वदुपदेशं विना इत्थं क्रियत इत्याह इदमचिरमधुनैव अनुचरणं कियद्वा ननुकथितं हरिं मनोहरशाशीलं मा परिहर मा त्यज, यतोऽतिशयेन सुन्दरम् ॥ ४ ॥

किमिति विषीदसि रोदिषि विकला।
विहसति युवतिसभा तव सकला॥ ५॥

एतत् श्रुत्वा अपगतधैर्यामश्रुमुखीं प्रत्याह त्वमधुनापि तच्चाटूक्त्यादि स्मारं स्मारं किमिति विषीदसि विकला सती रोदिषि वा मा विषीद मा रोदइत्यर्थः। कथं तव सकला प्रतिपक्षयुवतिसभा त्वन्मौग्ध्यदर्शनेन विशेषेण हसति ॥ ५ ॥

सजलनलिनिदलशीतलशयने।
हरिमवलोकय सफलय नयने॥ ६ ॥

यथेयं न विहसति तथोपदिशत्याह साम्बुपद्मपत्रै रचितशय्यायां हरिमवलोकय, कथं नयने सफलय, त्रिभुवने नयनोत्सवावलोकनादन्यत् फलं नास्तीत्यर्थः॥ ६ ॥

जनयसि मनसि किमिति गुरुखेदम्।
शृणु मम वचनमनीहितभेदम्॥ ७ ॥

एतत् श्रुत्वापि खिद्यन्तीं प्राह मनसि गुरु खेदं किमिति जनयसि नैवं विधेयं मम वचनं शृणु, कीदृशम् अनीहितमचेष्टितम् अभिलषितमिति यावत् प्रकृते त्वनीहितं विरहदुःखमेव तस्य भेदो यस्मात् तत्॥ ७ ॥

हरिरुपयातु वदतु बहु मधुरम्।
किमिति करोषि हृदयमतिविधुरम्॥८॥

श्रोतव्यमेवाह हरिरुप समीपं यातु, बहु चाटुकरोति हृदयमतिवञ्चितं किमिति करोषि श्रीकृष्णस्य मधुरवचनेन मोदयस्व चित्तं मा खेदयेत्यर्थः॥ ८ ॥

श्रीजयदेवभणितमतिललितम् ।
सुखयतु रसिकजनं हरिचरितम् ॥९॥

श्रीजयदेवभणितं रसिकजनं सुखयतु यतः हरेश्चरितं यत्र तत् अतएवातिललितम् ॥ ९ ॥

स्निग्धे यत् परुषासि यत् प्रणमति स्तब्धासि यद्रागिणि, द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन् प्रिये । तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चाविषं, शीतांशुस्तपनो हिमं हुतवहः क्रीड़ामुदो यातनाः ॥ १० ॥

अथ तस्यामनुत्तरायां सेर्ष्यमेवाह स्निग्ध इति । तस्मिन् प्रिये निरुपाधिप्रेमानुबन्धबन्धुरे स्निग्धे चाटुवाक्प्रयोक्तरि यत् परुषासि निष्ठुरासि प्रणमति प्रणतौ स्तब्धासि दण्डवत् स्थितासि यद्रागिण्यनुरागयुक्ते द्वेषं यासि विरक्तासि यदुन्मुखे त्वन्मुखावलोकनोत्सुके विमुखतां यातासि विमुखीभूतासि, हे विपरीतकारिणि तदेतत् ते यद्विपरीतं जातं तद्युक्तमेव, तत् किमित्याह चन्दनानुलेपो विषमिवोद्वेजकः तापापहारी चन्द्रः सूर्य्यवत्तापकः हिमं वह्निवत् दाहकं रतिजनितहर्षास्तीव्रवेदनाः विपरीत कृते विपरीतमेव फलं स्यादित्यर्थः ॥ १० ॥

सान्द्रानन्दपुरन्दरादिदिविषद्वृन्दैरमन्दादरादानम्रैर्मुकुटेन्द्रनीलमणिभिः सन्दर्शितेन्दीवरं ।
स्वच्छन्दं मकरन्दसुन्दरगलन्मन्दाकिनीमेदुरं
श्रीगोविन्दपदारविन्दमशुभस्कन्दाय वन्दामहे
॥ ११ ॥

इति श्रीगीतगोविन्दे कलहान्तरितावर्णने मुग्धमुकुन्दो-
नाम नवमः सर्गः ।

अथ श्रीकृष्णस्य राधिकां प्रति वक्ष्यमाणचाटूक्तिस्मरणेन श्रीराधिकामहिमस्फूर्त्यानन्दाविष्ट सत्सौभाग्यद्योतनाय श्रीकृष्णस्यैश्वर्यमाह सान्द्रेति। श्रीगोविन्दस्य पदारविन्दम् अशुभानां भक्तिप्रतिबन्धकानां विनाशाय वन्दामहे कीदृशं वलैर्नियमान्निविड़ आनन्दो येषाम् तेषाम् इन्द्रादिदेवतानां वृन्दैरधिकादरादानम्रै र्मुकुटेन्द्रनीलमणिभिः सन्दर्शितम् इन्दीवरं यत्र तत् कुतो यतः स्वच्छन्दं मकरन्दवत् सुन्दरं यथा स्यात् तथा गलन्त्या आकाशगङ्गया स्निग्धं, यस्यैकांशस्येदृङ्महिमा तेन श्रीकृष्णेन यच्चरण शिरोधारणं प्रार्थ्यते तत्सौभाग्यं केन वर्णनीयमित्यर्थः। अतएव श्रीराधिका मानोपशमनचिन्तया मुग्धो मुकुन्दो यत्र स इति॥ ११॥

इति श्रीगीतगोविन्दटीकायां नवमः सर्गः।

---

## दशमः सर्गः।

**अत्रान्तरे मसृणरोषवशामसीम-**
**निःश्वासनिःसहमुखीं सुमुखीमुपेत्य।**
**सव्रीडमीक्षितसखीवदनां प्रदोषे**
**सानन्दगद्गदपदं हरिरित्युवाच॥१॥**

ततः प्रातरारभ्योक्तप्रकारेण दिवसे वृत्ते सति उपक्रान्ताम्बुदाहृतेन्दुनिशादिवृत्तमाह अत्रेत्यादिना। अस्मिन्नवसरे प्रदोषसमये किञ्चित्कोपोपशमनेन प्रसन्न वदनां श्रीराधां समीपमागत्य आनन्देन गलद्गद्गदपदेन सहितं यथा स्यात्तथा हरिरिति वक्ष्यमाणवचनमुवाच कीदृशीम् अतिनिःश्वासेन निःसहविरहदुःखासहिष्णुतया कान्तवचनादिरहितं मुखं यस्यास्तां यतः शिथिलमानेन सख्यायत्ताम्

अतएव किमधुना विधेयमिति सव्रीड़ं यथा स्यात्तथा ईक्षितं सखीवदनं यया ताम्॥ १॥

देशवराड़ीरागाष्टकतालाभ्यां गीयते।

वदसि यदि किञ्चिदपि दन्तरुचिकौमुदी
हरति दरतिमिरमतिघोरम्।
स्फुरदधरसीधवे तव वदनचन्द्रमा
रोचयति लोचनचकोरम्॥
प्रिये चारुशीले मुञ्च मयि मानमनिदानम्।
सपदि मदनानलो दहति मम मानसं
देहि मुखकमलमधुपानम्॥ २॥ ध्रुवम्॥

किमुवाच तदाह वदसीत्यादिना। अस्यापि वराड़ीरागाष्टतालीतालौ। लघुद्रुतौ लघुश्चेति अष्टताली प्रकीर्त्तितेति ताललक्षणं हे प्रिये! चारुशीले मयि मानं मुञ्च कीदृशम् अनिदानम् अकारणं चारुशीलाया अकारणमानस्यायुक्तत्वादित्यर्थः। यतः सपदि तत्क्षणं त्वन्मानसमकालमेव कामोऽग्निर्मम मानसं दहति ततोमुखकमलमधुपानं देहि अन्तर्दाहस्य पानेनैव शान्तिरित्यर्थः। दुरापमिदं दूरेऽस्तु हे प्रिये! त्वं यदि किञ्चिदपि वदसि तदा दन्तरुचिकौमुदी मम अतिघोरं भयतिमिरं हरति, तथा तव वदनचन्द्रमास्च मम लोचनचकोरं स्फुरदधरसीधवे उच्छलिताधरसुधापानार्थं साभिलाषं करोति, नयनयोश्चकोरत्वेन त्वदेकजीवनत्वमुक्तम्॥ २॥

सत्यमेवासि यदि सुदति मयि कोपिनी
देहि खरनयनशरघातम्।
घटय भुजबन्धनं जनय रदखण्डनं
येन वा भवति सुखजातम्॥३॥

त्वदेकजीवने मयि रोषो न सम्भवति चेत्तर्हि एवं कुरु इत्याह हे सुदति ! प्रसन्नवदने यदि सत्यमेव मयि कोपिन्यसि तदा खरा एव नयनशरास्तैः प्रहारं कुरु, तेन चेन्न तुष्यसि तदा भुजाभ्यां बन्धनं घटय, चेत्तेनाप्यसन्तोषस्तदा रदैर्द्दशैनः खण्डनं जनय, किं बहुनोक्तेन येन वा सुखजातं भवति सुखमुत्पद्यते तदेव कुरु, अत्र गूढोऽभिप्रायः स्त्रीयेऽपराधिनि दण्डएव उचितो नोपेक्षेति भावः ॥ ३ ॥

त्वमसि मम भूषणं त्वमसि मम जीवनं
त्वमसि मम भवजलधिरत्नम् ।
भवतु भवतीह मयि सततमनुरोधिनी
तत्र मम हृदयमतियत्नम् ॥ ४ ॥

ननु त्वयि मम कोपस्य कः प्रसङ्गः दण्डस्य वा या तव प्रिया सैव दण्डं करोतु इति चेत्तदाह त्वमेव मम जीवनम् असि, त्वमेव मम भूषणम् असि, तद्व्यतिरेकेण अन्यजीवनादिकमपि चेन्नास्ति तर्हि अन्याङ्गनानां का वार्त्तेत्यर्थः यतो भवः संसारः सएव जलनिधिस्तत्र त्वं रत्नरूपा सर्व्वप्रेयसी श्रेष्ठेत्यर्थः यथा निःस्वः कश्चित् रत्नाकरात् विचित्रचिन्तारत्नं लब्ध्वा आत्मानं पूर्णं मनुते तथाऽस्मिल्लोके स्त्रीरत्नं त्वां प्राप्य कृतार्थोऽस्मीति भावः अतएव भवतीह निरन्तरं मयि अनुकूला भवत्वित्यर्थः मम हृदयम् अतिशयेन यत्नो यस्य तत् ॥ ४ ॥

नीलनलिनाभमपि तन्वि तव लोचनं
धारयसि कोकनदरूपम् ।
कुसुमशरबाणभावेन यदि रञ्जयसि
कृष्णमिदमेतदनुरूपम् ॥ ५ ॥

स्वगुणपरीक्षणोपकरणत्वेन चेत् मामङ्गीकरोषि तथापि चरितार्थः स्यामित्याह हे तन्वि तव लोचनं नीलनलिनाभमपि सम्प्रति रक्तोत्पलरूपं धारयति तदेतेन त्वयि अनुरञ्जनविद्यास्तीत्यवधारितम् एषा अनुरञ्जनविद्या मयि परीक्ष्यताम् परीक्षण प्रकारमाह त्वं

यदि कृष्णां कृष्णरूपं मां तेन लोचनेन कुसुमशरवाणभावेन सानुरागदृष्ट्या रञ्जयसि तदिदमेतस्य योग्यं भवति शिक्षिता विद्या प्रयोगेणैव ज्ञायत इत्यर्थः ॥ ५ ॥

स्फुरतु कुचकुम्भयोरुपरि मणिमञ्जरी
रञ्जयतु तव हृदयदेशम् ।
रसतु रसनापि तव घनजघनमण्डले
घोषयतु मन्मथनिदेशम् ॥ ६ ॥

एतत् श्रवणेन किञ्चित् प्रसन्नां वीक्ष्य चातुर्य्येणाभीष्टं प्रार्थयते ततश्च मणिमाला कुचकुम्भयोरुपरि चञ्चला भवतु, तेन किं स्यात् तव हृदयदेशं शोभयतु किञ्च काञ्चयपि घनजघनमण्डले शब्दायतां कीदृक् शब्दं कुरुतां मन्मथस्याज्ञां घोषयतु वचनभङ्ग्या प्रार्थनाविशेषोऽयम् ॥ ६ ॥

स्थलकमलगञ्जनं मम हृदयरञ्जनं
जनितरतिरङ्गपरभागम् ।
भण मसृणवाणि करवाणि चरणद्वयं
सरसलसदलक्तकरागम् ॥ ७ ॥

तथाप्यनुत्तरमाह हे स्निग्धवचने ! भण आज्ञापय, ननु किमाज्ञापयामि तव चरणद्वन्द्वं सरसेन लसता अलक्तकेन रागो यत्र तादृशं करवाणि यतस्त्वद्विरहातुरं मदुद्वेगदायि स्थलकमलगञ्जनं गञ्जयतीति गञ्जनं तत्तिरस्कारकमित्यर्थः प्रारक्तत्वात् कोमल्याच्च अत एव मम हृदयानुरञ्जकं यतो जनितो रतिरङ्गे परभागः परमशोभा येन तत् ॥ ७ ॥

स्मरगरलखण्डनं मम शिरसि मण्डनं
देहि पदपल्लवमुदारम् ।

ज्वलति मयि दारुणो मदनकदनानलो
हरतु तदुपाहितविकारम् ॥ ८ ॥

अतस्तदङ्गीकारेणैव मम तापोपशमनमिति सर्व्वविजयितद्गुणस्फूर्त्तिपरवशः सन् प्रार्थयते । हे प्रिये मम शिरसि पदपल्लवमर्पय कीदृशम् उदारं वाञ्छितप्रदम् अतो महत् किमर्थं स्मरगरलं खण्डयतीति तत् । न केवलमिदं मण्डनं भूषणञ्च कथमेवं प्रार्थयसे इत्याह कामक्लेशएव दारुणोऽनलोऽग्निर्म्मयि ज्वलति अतस्तेनोपाहितविकारं नानावस्थारूपं हरतु तद्धारणमात्रेण तापोऽपयास्यतीत्यर्थः ॥ ८ ॥

इति चटुलचाटुपटु चारु मुरवैरिणो
राधिकामधि वचनजातम् ।
जयति पद्मावतीरमणजयदेवकवि-
भारतीभणितमतिशातम् ॥ ९ ॥

इत्युक्तप्रकारेण मुरवैरिणो राधिकां लक्षीकृत्य वचनसमूहो जयति सर्व्वोत्कर्षेण वर्त्तते परमप्रेयसीविषयत्वादिति कीदृशं चटुलं चञ्चलम् अनेकप्रकारमिति यावत् चटुलचाटुना पटु मानापनयनसमर्थं, चारु अनुरागशोभनं, पुनः कीदृशम् अतिशातं परमसुखप्रदमित्यर्थः पुनः कीदृशं पद्मावती श्रीराधा तत्परतया तथानाम्नी श्रीजयदेवपत्नी तद्गुणवर्णनादिना तस्या रमणस्य श्रीजयदेवकवेर्भारत्या भणितम् । शर्म्म शात सुखानि चेत्यमरः ॥ ९ ॥

परिहर कृतातङ्के शङ्कां त्वया सततं घन-
स्तनजघनयाक्रान्ते स्वान्ते परानवकाशिनि ।
विशति वितनोरन्यो धन्यो न कोऽपि ममान्तरं
प्रणयिनि परीरम्भारम्भे विधेहि विधेयतां ॥१०॥

अथ तदर्थं त्वपरं सत्यं विज्ञापयितुमाह परीति । अन्यस्त्रीसम्भोगवितर्कशङ्काकृत आतङ्कः शङ्का यया हे तादृशि शङ्कां परि-

इह, कथं त्वया निरन्तरं व्याप्ते मनसि अन्तरमभ्यन्तरं वितनो-स्तनुशून्यात् कामादन्यो धन्यस्तादृक् सौभाग्यवान् जनः कोऽपि न प्रविशति, मनोद्वारेणैवैतदभ्यन्तरं प्रविशति मनश्चेत् त्वया व्याप्तं केन पथा प्रवेष्टव्यमित्यर्थः। अतएवान्यत्रकाशशून्ये इतरावकाशाव-सरो नचेन्ममनसि आस्तां तत् कथं त्वयि साधारणदृष्टिः स्यादि-त्यर्थः शङ्कां त्यक्त्वा च किं कर्त्तव्यं हे प्रणयिणि परीरम्भस्यारम्भ इतिकर्त्तव्यतां कुरु ॥ १० ॥

मुग्धे विधेहि मयि निर्द्दयदन्तदंश
दोर्व्वल्लिबन्धनिविडस्तनपीडनानि ।
चण्डि त्वमेव मुदमञ्च न पञ्चबाण-
चाण्डालकाण्डदलनादसवः प्रयान्तु ॥११॥

यदि मद्वचनान्न प्रत्येषि तर्हि स्वयमेव दण्डमाचरेत्याह मुग्ध-इति। क्रोधे दण्डमकुर्व्वाणे इति सम्बोधनं कोपावेशान्नैतद्बुध्यस इति चण्डीति त्वमेव मुदमञ्च सुखं प्राप्नुहीत्यर्थः तत्प्रकारमाह क्षीणो-पाये मयि निर्द्दयदन्तदंशदोर्व्वल्लिबन्धनिविड़स्तनप्रहरणानि विधेहि एतानि विधाय मुदमाप्नुहीत्यर्थः। किमेतावता सेत्स्यति पञ्चबाण-एव चाण्डाल दुष्टचेष्टत्वात् तस्य बाणप्रहरणात् प्राणाः मम न प्रयान्तु ॥ ११ ॥

शशिमुखि तव भाति भङ्गुरभ्रू-
र्युवजनमोहकरालकालसर्पी ।
तदुदितभयभञ्जनाय यूनां
त्वदधरसीधुसुधैव सिद्धमन्त्रः ॥ १२ ॥

मम कोपो नास्त्येवेति चेत्तत्राह शशीति। हे शशिमुखि तव भङ्गुरभ्रूर्भाति कोपिनी चेन्नासि तत् कुतो भ्रुवोर्भङ्गुरत्वमिति भावः। सहजैव भ्रूर्भङ्गुरा न कोपात् इति चेत्तत्राह युवजनस्य मम मोह-

नाय भयङ्करी कालसर्पी, भीत्युत्पादानं कोपादेवेत्यर्थः तर्हि तया दष्टस्य तत्र औषधाभावादनर्थापत्तिरेव स्यादत आह तस्या इदि- तस्य भयस्य नाशाय यूनामस्माकं बहुवचनं तस्याः प्रसन्नतामालक्ष्य आत्मनो बहुमानित्वात् त्वदधरसीधुसुधैव सिद्धमन्त्रः नान्यत् किञ्चि- दस्तीत्येवशब्दार्थः मादकत्वात् सीधु इति मधुरत्वात् सुधा इ- त्युक्तं कालसर्पदष्टस्यामृतादेव जीवनं नान्ययेत्यनन्यगतिकत्वञ्च बोधितम् ॥ १२ ॥

व्यथयति वृथा मौनं तन्वि प्रपञ्चय पञ्चमं
तरुणि मधुरालापैस्तापं विनोदय दृष्टिभिः ।
सुमुखि विमुखीभावं तावद्विमुञ्च न मुञ्च मां
स्वयमतिशयस्निग्धो मुग्धे प्रियोऽयमुपस्थितः ॥१३

एवमुक्तेऽप्यनुत्तरमाह व्यथयतीति । हे तन्वि मद्लाभात् त्वमपि कृशासीत्यर्थः यस्माद्वृथा मौनं मां व्यथयति तस्मात् पञ्चमस्वरं प्रपञ्चय विस्तारय मधुरं वदेत्यर्थः तेन किं स्यात् हे तरुणि मधुरालापैः पिकरुतादिजं कर्णज्वरमपसारय किञ्च हे सुमुखि कृपावलोकै- स्तावदौदास्यं त्यज मां न मुञ्च सुमुख्या विमुखीभावो न युक्त इत्यर्थः कथमेवं करोषि तत्राह हे मुग्धे विचारानभिज्ञे प्रियोऽयमतिशय- स्निग्धः कथं स्निग्धज्ञानं स्वयमनाहूत एवागतः अतस्त्वत्त्यागो मूढ- तैवेत्यर्थः ॥ १३ ॥

बन्धूकद्युतिबान्धवोऽयमधरः स्निग्धो मधू-
कच्छवि, र्गण्डे चण्डि चकास्ति नीलनलिनश्री-
मोचनं लोचनम् । नासाभ्येति तिलप्रसून-
पदवीं कुन्दाभदन्ति प्रिये, प्रायस्त्वन्मुखसेवया
विजयते विश्वं स पुष्पायुधः ॥ १४ ॥

अतः पञ्चपुष्पाश्रितं तवास्यम् अनङ्गः पुष्पायुधविलासेन मां

दुनोतीति भङ्गुरा तदङ्गानि स्तौति बन्धुकेति । हे चण्डि ! हे प्रिये ! स प्रसिद्धः पुष्पायुधः प्रायस्त्वन्मुखसेवया विश्वं विजयते अभिभवति एतदहमुत्प्रेक्षे, पुष्पाणि तव मुखे सन्तीति पुष्पायुधस्य त्वन्मुखसेवोत्प्रेक्षिता कानि पुष्पाणि तवायमधरो बन्धूक पुष्पस्य द्युतेर्बान्धवः लोहितत्वात् साम्यं, गण्डे मधूकपुष्पच्छविश्चकास्ति पाण्डुत्वादत्र साम्यं, नीलनलिन श्रीमोचने लोचने कार्ष्ण्यादत्र साम्यं, नासा तिलप्रसूनपदवीमन्वेति अत्राकृत्या साम्यं, हे कुन्दाभदन्ति अत्र गौरत्वात् साम्यं, त्वन्मुखसेवया एतानि पुष्पाणि लब्ध्वा तैरेवायुधैः पुष्पै र्विश्वं जयतीत्यर्थः ॥ १४ ॥

दृशौ तव मदालसे वदनमिन्दुसन्दीपनं
गतिर्जनमनोरमा विजितरम्भमूरुद्वयम् ।
रतिस्तवकलावती रुचिरचित्रलेखे भ्रुवा-
वहोविबुधयौवतं वहसि तन्वि पृथ्वीगता ॥ १५ ॥

हे तन्वि ! क्षीणापि त्वं पृथिवीगतापि अतिदुर्लभं देवयुवतिसमूहं वहसीत्यहो आश्चर्यं तत्प्रकारमाह तव दृशौ मदालसे मदनहर्षेणालसे स्वर्गेतु एकैव मदालसा नाम अङ्गना त्वं मदालसे द्वे दृशौ धारयसीति आश्चर्यमित्यर्थः तवेति सर्वत्रान्वेति तथा वदनम् इन्दुं सन्दीपयतीति तत् तत्रेन्दुसन्दीपनी नाम्नी किञ्च गतिर्ज्जनस्य मम मनोरमा तत्र मनोरमा नाम्नी अपरञ्च ऊरुद्वयं तिरस्कृता कदली येन तत् तत्र रम्भा नाम्नी, रतिः कौशलवती तत्र कलावती नाम्नी, भ्रुवौ रुचिरे चित्रलेखेइव तत्रैका चित्रलेखेति ॥ १५ ॥

प्रीतिं वस्तनुतां हरिःकुवलयापीडेन सार्द्धं रणे
राधापीनपयोधरस्मरणकृत्कुम्भेन सम्भेदवान् ।
यत्र खिद्यति मीलति क्षणमप क्षिप्ते द्विपे
तत्क्षणात्, कंसस्यालमभूज्जितं जितमिति
व्यामोहकोलाहलः ॥ १६ ॥

इति श्रीगीतगोविन्दे मानिनीवर्णने मुग्धमाधवोनाम
दशमः सर्गः ।

एवं स्वप्रियागुणकीर्त्तनावेशान्महाशङ्कटस्थानेषु तत्स्पर्शसुखस्मरणपरवशं श्रीकृष्णं वर्णयन्नास्ते प्रीतिमिति । हरिर्व्वो युष्माकं प्रीतिं तनुतां कीदृशः रणे कुवलयापीड़ेन आसङ्गवान् कीदृशेन श्रीराधायाः पीनपयोधरयोः स्मरणकृतौ सादृश्येन संस्कारोद्बोधकतया स्मारकौ कुम्भौ यस्य तेन यत्र स्वेदे तत्सुखे सात्विकोदयात् श्रीकृष्णे क्षणं स्विद्यति सति मीलति च सति कंसस्यापि अस्माभिर्जितं जितमिति व्यामोहकोलाहलोऽभूत् तेनावहितेन श्रीकृष्णेन क्षिप्ते द्विपे सति तत्क्षणादनेन जितं जितमिति व्यामोहकोलाहलोऽभूदिति पूर्व्वत्र व्यामोह आनन्देन उत्तरत्र शोकेनेति ज्ञेयम् । अतएव सर्गोऽयं श्रीराधास्मरणविकारवर्णनेन मुग्धो मनोहरो माधवो यत्र स इति ॥ १६ ॥

इति श्रीगीतगोविन्दटीकायां दशमः सर्गः ।



## एकादशः सर्गः ।

सुचिरमनुनयनेन प्रीणयित्वा मृगाक्षीं
गतवति कृतवेशे केशवे कुञ्जशय्याम् ;
रचितरुचिरभूषां दृष्टिमोषे प्रदोषे
स्फुरति निरवसादां कापि राधां जगाद ॥ १ ॥

एवं प्रियां प्रसाद्य मेघैर्म्मेदुरमम्बरमित्युपक्रान्तवचनात् सखीसम्मतिञ्चालभ्य कुञ्जशय्यां श्रीकृष्णे गतवति सति सखी श्रीराधिकामाह सुचिरमिति । दृष्टिं मुष्णाति तमसावृणोति दृष्टिमोषः तस्मिन् प्रदोषे स्फुरति सति केशवे च राधारचितकुञ्जशय्यां तदागमननिश्चया गतवति सति कापि मेघैर्म्मेदुरमित्याद्युक्तवचनां श्रीराधां जगाद किं कृत्वा बहुकालं व्याप्यानुनयनशपथपादपतनादिना मृगाक्षीं प्रीणयित्वा कीदृशीं रचिता तामभ्यभिसारवेशमुत्तार्य्य प्रियरुचिकरी भूषा यया तां पुनः कीदृशीम् अवसादात् प्रियाप्राप्तिजन्यात् दुःखान्निर्गतां कीदृशे कृतः प्रियामनोहरो वेशो येन तस्मिन् ॥ १ ॥

वसन्तरागयतितालाभ्यां गीयते ।

विरचितचाटुवचनरचनं चरणे रचितप्रणिपातं। सम्प्रति मञ्जुलवञ्जुलसीमनि केलिशयनमनुयातम् ॥ मुग्धे मधुमथनमनुगतमनुसर राधिके ॥ २ ॥ ध्रुवं ॥

यज्जगाद तदाह विरचितेत्यादिना । अस्यापि वसन्तरागयतितालौ । हे मुग्धे अधुना तम् अनुगतं मधुमथनं वसन्तस्यापि चोभकम् अनुगच्छ अनुगतानुगमनशैथिल्यान्मुग्धे इति सम्बोधनमिति । तदनुगतिमाह विरचिता नानाभङ्ग्या प्रतिपादिता चाटुवचनानां रचना येन तं चाटुवचनमात्रेण कथं स्रेयाऽनुगतिः चरणे रचितो निजानन्यगतिव्यञ्जकः प्रणिपातः प्रणतिर्येन तं त्वत्समीपस्थितायां मयि कथं प्रार्थ्यते संप्रति तेन तव प्रसादमालभ्य मनोहरवञ्जुलकुञ्जकस्य सीमनि मध्यमभागे यत् केलिशयनं तत्र गतं त्वदागमनप्रतीक्षया स्थितम् ॥ २ ॥

घनजघनस्तनभारभरे दरमन्थरचरणविहारं । मुखरितमणिमञ्जीरमुपैहि विधेहि मरालनिकारम् ॥ ३ ॥

एतन्निशम्य मौनेन सम्मतिं समूहमाना शीघ्रगमनप्रकारमाह जघनेत्यादिना। जघने स्तनौ च जघनस्तनं घनं स्थूलं यज्जघनस्तनं तस्य भारस्य भरोऽतिशयो यस्यां हे तादृशि दरमन्थरचरणविहारं यथा स्यात्तथा प्रियसमीपं गच्छ तथा मुखरितौ मणिमञ्जीरौ यत्र तद्य यथा स्यात्तथा तेन च हंसपरिभवं कुरु नूपुरध्वनेर्हंसस्वरपरिभावित्वादित्यर्थः। मराळो हंस पक्षिणि, निकारः स्यात् परिभव इति च विश्वः॥ ३॥

शृणु रमणीयतरं तरुणीजनमोहनमधुरिपुरावम्। कुसुमशरासनशासनवन्दिनि पिकनिकरे भज भावम्॥ ४॥

तत्र गत्वा किं करोमि मधुरिपो वारं तत्कालोचितनर्मालापं शृणु कीदृशम् अतिरमणीयम् अतएव तरुणी जनानां मोहजनकं ततः कोकिलसमूहे द्वेषं त्यक्त्वा भावं प्रीतिं कुरु कीदृशे कुसुमशरासनस्य शासनवन्दिनि "हे युवत्यः कान्तसन्नाहमन्तरेण मद्बाणादन्यो रक्षिता नास्त्यतो मानं त्यजतइति कामाज्ञा" तस्याः स्तावके॥ ४॥

अनिलतरलकिशलयनिकरेण करेण लतानिकुरम्बम्। प्रेरणमिव करभोरु करोति गतिं प्रति मुञ्च विलम्बम्॥ ५॥

तद्वचनमनुमोदमाना अचेतनापि लता त्वां प्रेरयतीत्याह हे करभोरु लतासमूहोऽपि अनिलतरलकिशलयनिकरेण करेण तव प्रेरणं करोति तस्माद्गतिं प्रति विलम्बं शैथिल्यं मुञ्च अचेतनानुकूल्येनापि लक्ष्येतो न द्रवति इत्यभिप्रायः वस्तुतस्तु उद्दीपनमेवैतत् सर्वम्॥ ५॥

स्फुरितमनङ्गतरङ्गवशादिव सूचितहरि-

परिरम्भम्। पृच्छ मनोहरहारविमलजल
धारममुं कुचकुम्भम्॥ ६॥

एवं भावमुद्गीर्य तद्विकारानाह यदि मद्वचनमनात्मीयमिति मन्यसे हे सखि तदा आत्मीयममुं कुचकुम्भं पृच्छ कीदृशम् अनङ्गतरङ्गवशात् कम्पितमिव पुनः कीदृशं मनोहरो हार एव विमला जलधारा यत्र तं कुचोऽयं कलसत्वेन निरूपितः कम्पितश्चानङ्गतरङ्गवशात् तस्माद्धारोऽपि जलधात्वेन निरूपितः अतोऽभ्युच्यते सूचितहरिपरिरम्भमिवेति वामस्तनकम्पनं हि नार्य्याः प्रियसङ्गमं सूचयतीति प्रसिद्धेरयमेव जिज्ञास्य इत्यभिप्रायः॥ ६॥

अधिगतमखिलसखीभिरिदं तव वपुरपिरति
रणसज्जम्। चण्डि रणितरसनारवडिण्डिम
मभिसर सरसमलज्जम्॥ ७॥

संप्रति माधवानुसरणे काञ्च्यादि भूषणमेव त्वां वाद्यं व्यनक्ति इत्याह तवेदं वपु रतिरणसज्जम् इत्यखिलसखीभिरपि ज्ञातं कथमन्यथा काञ्च्यादि ग्रहणमिति भावः न केवलं मन एव वपुरपीत्यपेरर्थः ततो हे चण्डि! रणप्रवीणे अलज्जं लज्जारहितं सरसं सोत्साहं रणिता रसना सैव रवडिण्डिमो वाद्यभाण्डविशेषो यत्र एतच्च यथा स्यात्तथा अभिसर प्रियाभिमुखमनङ्गरङ्गं याहि रणसज्जितस्य विलम्बो भयाशङ्काम् आसञ्जयतीत्यर्थः॥ ७॥

स्मरशरसुभगनखेन करेण सखीमवलम्ब्य
सलीलम्। चल वलयक्वणितैरवबोधय हरि-
मपि निजगतिशीलम्॥ ८॥

तव गमनप्रकारमाह हे सखि! करेण सखीमालम्ब्य सलीलं यथा स्यात्तथा चल कीदृशेन स्मरशरसुभगनखेन संग्रामार्थं पञ्च नखा एव मोहनादि कामास्त्राणि तानि गृहीत्वा गच्छेत्यर्थः गत्वा च वलय-

कथितैर्हरिमपि अवबोधय रणाय सावधानं कुरु कीदृशं निजगतौ त्वत्प्राप्तौ शीलं समाधिर्यस्य, शीलं समाधौ। समीचीनो योद्धा हि प्रतिभटम् अवहितं कृत्वैव युध्यत इत्यर्थः ॥ ८ ॥

श्रीजयदेवभणितमधरीकृतहारमुदासितवामं। हरिविनिहितमनसामधितिष्ठतु कण्ठतटीमविरामम् ॥ ९ ॥

श्रीजयदेवभणितं हरिविनिहितमनसां जनानां कण्ठतटीम् अविरामं यथा स्यात्तथा तिष्ठतु हारादेः सद्भावे कथमस्याविरामता सिद्धिस्तत्राह अधरीकृतो हारो येन तत् इदमेव परमं कण्ठभूषण-मित्यर्थः भूषणवैलक्षण्येन वामाग्रहत्या विच्छेदः स्यात् तत्राह उदा-सितेति दूरीकृता वामा प्रकृष्टा रमणी येन तत् हृद्रोगमाश्वपहिनो-तीत्युक्तेः ॥ ९ ॥

सा मां द्रक्ष्यति वक्ष्यति स्मरकथां प्रत्यङ्गमालिङ्गनैः, प्रीतिं यास्यति रंस्यते सखि समागत्येति सञ्चिन्तयन्। स त्वां पश्यति वेपते पुलकयत्यानन्दति स्विद्यति, प्रत्युद्गच्छति मूर्च्छति स्थिरतमःपुञ्जे निकुञ्जे प्रियः ॥ १० ॥

पुनस्त्वरयितुं श्रीकृष्णस्यात्युत्कण्ठामाह सेति। सा प्रियसखी-वचनानुरोधेन सविलास मन्दगमनेन समागत्य मां तन्मुखाब्जं साद-रमवलोकयन्तं प्रसन्नदृष्ट्या द्रक्ष्यति समागत्येति प्रत्येकं सम्बध्यते दृष्ट्वा च स्मरकथां वक्ष्यति प्रेमालापं कृत्वा च प्रत्यङ्गमालिङ्गनैः प्रीतिं प्राप्-स्यति प्रीतियुक्ता सती मया सह रंस्यत इति सञ्चिन्तयन् स्थिर-तमःपुञ्जे तमालवनान्धकारस्यैतत् निविडे तरुच्छायान्धकारस्यैव स्थितत्वात्तमः प्रविष्टमालक्ष्य इति श्रीशुकोक्तिवत् निकुञ्जे स प्रियः श्रीकृष्णस्त्वां पश्यति दृष्ट्वा च मुदा वेपते पुलकयति आनन्दति स्वि

द्यति च सैषा प्रिया आगतेति प्रत्युद्गच्छति ततश्चानन्दावेशेन मूर्च्छति ॥ १० ॥

अक्ष्णोर्निक्षिपदञ्जनं श्रवणयोस्तापिञ्छगुच्छावलीं, मूर्ध्नि श्यामसरोजदाम कुचयोः कस्तूरिकापत्रकम्। धूर्त्तानामभिसारसत्वरहृदां विष्वङ्निकुञ्जे सखि, ध्वान्तं नीलनिचोलचारु सुदृशां प्रत्यङ्गमालिङ्गति ॥११॥

अथान्धकाराभिसारोचितवेशोपकरणमप्येतदेवेत्याह अक्ष्णोरिति। हे सखि! सर्वतोव्यापि ध्वान्तं सुदृशां प्रत्यङ्गमालिङ्गति प्रियाभिसारानुकूल्येन सुखं ददातीत्यर्थः कीदृशं नीलनिचोलादपि चारु सर्वाङ्गावरकत्वेनालिङ्गनमुत्प्रेक्षितं कीदृशानां 'धूर्त्तानां परवञ्चकानाम् अतएवाभिसारे सत्वरं हृदयं यासां तासां परवञ्चकतया काचित् कदाचित् सत्वरमभिसरेदित्यतो विलम्बो न कार्य्य इत्यर्थः किं कुर्वन् अक्ष्णोरञ्जनं श्रवणयोस्तमालस्तवकश्रेणीं मूर्ध्नि श्यामसरोजानां दाम कुचयोः कस्तुरिकापत्रं पत्रभङ्गलेखाञ्च निक्षिपत् दुरं प्रेरयत् ॥ ११ ॥

काश्मीरगौरवपुषामभिसारिकाना-
माबद्धरेखमभितो रुचिमञ्जरीभिः।
एतत्तमालदलनीलतमं तमिस्रं
तत्प्रेमहेमनिकषोपलतां तनोति ॥ १२ ॥

न केवलं भूषणं प्रेमपरीक्षणकारणमप्येतदेवेत्याह काश्मीरेति। एतत्तमिस्रम् अभितोऽभिसारिकानां रुचिमञ्जरीभिः आवद्धरेखं सत् तत्प्रेमहेम्नो निकषपाषाणतां तनोति कीदृशीनां काश्मीरवद्गौरं वपुर्यासां तासां यथा निकषपाषाणे सुवर्णशुद्धिजिज्ञासा तथा तासां प्रेम्णोपि घनान्धकारे निःसाध्वसतया गमने जिज्ञासेति भावः

कीदृशं तमालदलवन्नीलतमम् एतेनान्धकारस्य नैविड्यं प्रतिपादितं तमालवनविहरणाच्च ॥ १२ ॥

हारावलीतरलकाञ्चनकाञ्चिदाम
मञ्जीरकङ्कणमणिद्युतिदीपितस्य ।
द्वारे निकुञ्जनिलयस्य हरिं विलोक्य
व्रीडावतीमथ सखीमियमित्युवाच ॥ १३ ॥

इदानीं तन्निकटं गत्वा अत्युत्सुकं श्रीकृष्णं वीक्ष्य गन्तुमुद्यतामपि लज्जया तत्पार्श्वमभजमानां सखी प्राह हारेति। निकुञ्जनिलयस्य द्वारे हरिं विलोक्य अथानन्तरमियं सखी लज्जावतीं सखीं श्रीराधामिति वक्ष्यमाणमुवाच कीदृशस्य हारावलेर्मध्यगानां काञ्चनकाञ्चिदाम्नः मञ्जीरयोः कङ्कणयोश्च मणीनां द्युतिभिर्दीपितस्य। तरलो हारमध्यग इत्यमरः ॥ १३ ॥

देशवराड़ीरागरूपकतालाभ्यां गीयते ।

मञ्जुतरकुञ्जतलकेलिसदने ।
प्रविश राधे माधवसमीपमिह
विलस रतिरभसहसितवदने ॥ १४ ॥

किमुवाच सखीत्याह मञ्जुतरेत्यादिना! अस्यापि वराड़ीरागरूपकतालौ। हे राधे! माधवसमीपं प्रविश प्रविश्य च इह मञ्जुतरकुञ्जतलमेव केलिसदनं तत्र विलस रतिरभसेन हसितं वदनं यस्या हे तादृशि तव उच्छलितं मनोऽत्युत्सुकतया हास्यमिषेण प्रियमिलनाय वहिर्निर्गतमिति भावः ॥ १४ ॥

नवभवदशोकदलशयनसारे ।
प्रविश राधे माधवसमीपमिह
विलस कुचकलसतरलहारे ॥ १५ ॥

न मन्मन उच्छलितं किन्तु अस्य तव नागरस्य वैकल्यमाकलय्य मद्वदनं हसितमिदं तत्राह सर्व्वत्र पूर्व्ववन्मुखबन्धयोजना प्रतिपदे शेषाङ्कं ध्रुवम्। केलिसदने कीदृशे नवभवदशोकदलैः पल्लवै रचितं शयनस्थैर्छं यत्र तस्मिन् कुचकलसयोः कम्पेन तरलो हारो यस्याः हे तादृशि! कुचकम्पेनाल्पष्टैत्ति व्यक्ता अतो वाम्यं न कुर्व्वित्यर्थः॥१५॥

कुसुमचयरचितशुचिवासगेहे।
प्रविश राधे माधवसमीपमिह
विलस कुसुमसुकुमारदेहे॥१६॥

अस्याभिप्रायविशेषविकलनात् कम्पोऽयमित्याह पुनः कीदृशे कुसुमचयेन रचितं शुचेः शृङ्गारस्य वासगेहं यत्र तस्मिन् निकुञ्जाभ्यन्तरे पुष्पगृहरचनाविशेष इति न पौनरुक्त्यं कुसुमेभ्योऽपि सुकुमारो देहो यस्याः हे तादृशि निकुञ्जद्वारगतः प्रियसखीं प्रतीच्यते कुञ्जरचनापीदृशी त्वं कुसुमसुकुमारतनुरतो वाम्यमयुक्तमिति भावः॥१६॥

चलमलयवनपवनसुरभिशीते।
प्रविश राधे माधवसमीपमिह
विलस रतिवलितललितगीते॥१७॥

अथोद्दीपनातिशयेन केलिसदनमेव वर्णयति चलेन मलयवनस्य पवनेन सुरभिः शीतलञ्च यत्तस्मिन् रतौ वलितं रतियोग्यं ललितं गीतं यस्याः हे तादृशि अतोऽस्मिन् प्रविश्य तदाचरेत्यर्थः॥१७॥

विततबहुवल्लिनवपल्लवघने।
प्रविश राधे माधवसमीपमिह
विलस चिरमलसपीनजघने॥१८॥

पुनः कीदृशे विततानां बहुवल्लीनां पल्लवैर्घने निविड़े अलसञ्च पीनञ्च जघनं यस्याः हे तादृशि चिरमिति विलासक्रियाविशेषणम् ईदृक् जघनञ्च सफलं कुर्व्वित्यर्थः॥१८॥

मधुमुदितमधुपकुलकलितरावे।
प्रविश राधे माधवसमीपमिह
विलस मदनरससरसभावे ॥ १९ ॥

पुनः कीदृशे मधुना मुदितेन मधुपकुलेन विहितः शब्दो यत्र तस्मिन् मदनरसेन शृङ्गाररसेन सरसभावः सारस्यं यस्याः हे तादृशि ईदृक् प्रभावायास्तव निकटप्रवेश एव योग्य इति भावः॥१९॥

मधुतरलपिकनिकरनिनदमुखरे ।
प्रविश राधे माधवसमीपमिह
विलस दशनरुचिरुचिरशिखरे ॥ २० ॥

पुनः कीदृशे मधुरतरैः पिकनिकरैर्मुखरे दशना एव रुच्या रुचिरमाणिक्यविशेषा यस्या हे तादृशि ईदृग्दशनायास्तत्क्रियाविशेषकृत्यमेव योग्यमिति भावः पक्वदाड़िमबीजाभं माणिक्यं शिखरं विदुरिति हारावली ॥ २० ॥

विहितपद्मावतीसुखसमाजे !
कुरु मुरारे मङ्गलशतानि
भणति जयदेवकविराजराजे ॥ २१ ॥

हे मुरारे! जयदेवकविराजराजे भणति सति त्वदर्थं सखीप्रार्थनमिति शेषः। मङ्गलशतानि कुरु कथं विहितः पद्मावत्याः श्रीराधायाः सुखसमूहो येन तस्मिन् निजेष्टदेवोपासनायामित्यर्थः सर्वोत्तमत्वनिश्चयावेशेनात्मानं बहुमन्यमानस्य कविराजराजेति प्रौढ़ोक्तिरियम् ॥ २१ ॥

त्वां चित्तेन चिरं वहन्नयमतिश्रान्तो भृशं-तापितः, कन्दर्पेण च पातुमिच्छति सुधासम्बाध-विम्बाधरम् । अस्याङ्कं तदलं कुरु क्षणमिह

भ्रूक्षेपलक्ष्मीलवक्रीते दास इवोपसेवितपदा-
म्भोजे कुतः सम्भ्रमः॥ २२॥

अथ सखी प्रसादमालक्ष्य कौतुकेन सनर्म्म आह त्वमिति। अयं त्वां चित्तेन वहन्नतिश्रान्तः पीनस्तनश्रोणिगुरुतयेत्यर्थः कन्दर्पेण भृशं तापितः अतश्च श्रमेण तापेन च पिपासितः सुधया सस्वाधः शङ्कटं प्राप्तमिति यावत् बिम्बाधरं पातुमिच्छति तस्मात्स्याङ्कं क्षणं शोभय। अन्तःस्थिताया बहिःस्थितस्य पानानुपपत्तेरिति भावः। अविदिताभिप्रायस्य अङ्कप्रवेशे मन्मनः संकुचत्यत आह भ्रुवोः क्षेपश्चालनं स एव लक्ष्मीः ऋद्धिस्तस्या लेशेन क्रीते कुतः संकोचः कश्चिन्निव अल्पमूल्यक्रीते दासइव क्रयक्रीते शङ्का न युक्तेति भावः। क्रीतत्वे हेतुः सेविते पदाम्भोजे येन तस्मिन् क्रीतस्यैव सेवोपयोगादिति भावः॥ २२॥

सा ससाध्वससानन्दं गोविन्दे लोललोचना।
सिञ्जानमञ्जुमञ्जीरं प्रविवेश निवेशनम्॥२३॥

इति सखीवचनोच्छ्वसितचित्ता कुञ्जं प्रविवेशेत्याह सेति। सा सिञ्जानमञ्जु मञ्जीरं ससाध्वसं सानन्दञ्च यथा स्यात्तथा कुञ्जगृहं प्रविवेश प्रथमसमागमात् साध्वसं विच्छेदानन्तरप्राप्त्या सानन्दमिति ज्ञेयम् अतएव गोविन्दे लोले सतृष्णे लोचने यस्याः सा॥ २३॥

वराड़ीरागरूपकतालाभ्यां गीयते।

राधावदनविलोकनविकसितविविधविकार-
विभङ्गम्। जलनिधिमिव विधुमण्डलदर्शन-
तरलिततुङ्गतरङ्गम्॥ हरिमेकरसं चिरम-
भिलषितविलासं, सा ददर्श गुरुहर्षवशम्वद-
वदनमनङ्गनिवासम्॥ २४॥ ध्रुवं॥

एवं कुञ्जप्रवेशमुक्त्वा श्रीकृष्णस्य तद्दर्शनानन्दविकारान् वर्णयन् तस्यास्तद्दर्शनमाह राधेत्यादिना। अस्यापि वराड़ीरागरूपकतालौ। सा श्रीराधा हरिं ददर्श कीदृशम् एकस्मिन्नालम्बने श्रीराधारूपे रसो यस्य तं तस्याः सर्व्वोत्तमत्वनिश्चयेन तदेकपरत्वमित्यर्थः नन्वन्याङ्गनाभी रममाणस्य कुतस्तत्परत्वं चिरं पूर्व्वोक्तप्रकारेणाभिलषितस्तया सह विलासो येन तम् अतएव तत्प्रसादावकलनात् गुरुहर्षस्यायत्तं वदनं यस्य तम् अतएवानङ्गस्य विकाशो यत्र तम्। तदेकनिष्ठत्वमेव दृष्टान्तेनस्पष्टयति कीदृशं राधावदनविलोकनेनैव रससमुद्रस्य तस्य विकसिता प्रकटिता हर्षस्तथादय एव उर्म्मयो यत्र तं कमिव जलनिधिमिव कीदृशं जलनिधिं विधुमण्डलदर्शनेन चञ्चलीकृतास्तुङ्गतरङ्गा यत्र तम् अत्रश्रीकृष्णसमुद्रयोर्व्विकारोर्म्योः साम्यम् ॥ २४ ॥

हारममलतरतारमुरसि दधतं परिलम्बय
विदूरम्। स्फुटतरफेणकदम्बकरम्बितमिव
यमुनाजलपूरम् ॥ २५ ॥

पुनः कीदृशम् उरसि विदूरं परिलम्बय हारं दधानं कीदृशं हारं निर्म्मलमुक्ताग्रथितं कमिव यमुनाजलपूरमिव कीदृशं स्फुटतरफेणकदम्बेन खचितम्। अत्र श्रीकृष्णस्य यमुनाजल पूरेण हारस्य फेणसमूहेन साम्यम्। मुक्ताशुद्धौ च तारःस्यादिति विश्वः॥ २५॥

श्यामलमृदुलकलेवरमण्डलमधिगतगौरदुकूलं।
नीलनलिनमिव पीतपरागपटलभरवलयित
मूलम् ॥ २६ ॥

पुनः कीदृशं श्यामलं मृदुलञ्च कलेवरमण्डलं यस्य तं यथोचितावयवनिवेशप्रतिपादनार्थं मण्डलत्वेनोक्तिः तथा प्राप्तं पीतदुकूलं येन तं कमिव नीलनलिनमिव कीदृशं पीतरागानां समूहातिशयेन वेष्टितं मूलं यस्य तत् तत्र नीलकमलेन श्रीकृष्णस्य परागेण पीतवस्त्रस्य साम्यं परागवृतमूलवर्णनेनाद्भुतोपमेयम् ॥ २६ ॥

तरलदृगञ्चलवलनमनोहरवदनजनितरतिरागम् । स्फुटकमलोदरखेलितखञ्जनयुगमिव शरदि तडागम् ॥ २७ ॥

पुनः कीदृशं चञ्चलस्य दृगञ्चलस्य वलनेन मनोहरं यत् वदनं तेन जनितस्तस्या रति रागो येन तं कमिव शरदि तड़ागमिव कीदृशं विकसितं यत् पद्मं तस्योपरि क्रीड़ा परं खञ्जनयुगं यत्र तत् पद्मे खञ्जनदर्शनेन अभिलाषसिद्धिरिति सम्भाव्योपसेति ध्वनितम् अत्र श्रीकृष्णस्य तड़ागेन वदनस्य कमलेन नयनयोः खञ्जनयुगेन साम्यम् ॥ २७ ॥

वदनकमलपरिशीलनमिलितमिहिरसमकुण्डलशोभम् । स्मितरुचिरुचिरसमुल्लसिताधरपल्लवकृतरतिलोभम् ॥ २८ ॥

पुनः कीदृशं वदनमेव कमलं तस्य प्रकाशनाय मिलिताभ्यां सूर्यसदृशाभ्यां कुण्डलाभ्यां शोभा यत्र तं तथा स्मितएव रुचिस्तया रुचिरः समुल्लसितस्त्र राधाधर पानोत्कण्ठया उत्कम्पितो योऽधर-पल्लव स्तेन जनितो रतिलोभो येन तम् ॥ २८ ॥

शशिकिरणच्छुरितोदरजलधरसुन्दरसकुसुमकेशम् । तिमिरोदितविधुमण्डलनिर्मलमलयजतिलकनिवेशम् ॥ २९ ॥

पुनः कीदृशं शशिकिरणैर्व्याप्तमुदरं यस्य जलधरस्य तस्येव सुन्दराः सकुसुमाः केशा यस्य तम् । अत्र केशानां मेघेन पुष्पानामिन्दु-किरणेन साम्यं तथा तिमिरे उदितं यद्विधुमण्डलं तद्वन्निर्मल-चन्दनतिलकनिवेशो यस्य तम् अत्र ललाटस्य तिमिरेण तिलकस्ये-न्दुमण्डलेन साम्यम् इयमप्यद्भुतोपमा ॥ २९ ॥

विपुलपुलकभरदन्तुरितं रतिकेलिकलाभिर-

धीरम्। मणिगणकिरणसमूहसमुज्ज्वलभूषण
सुभगशरीरम् ॥ ३० ॥

पुनः कीदृशं विपुलानां पुलकानामतिशयेन विषमीकृतं क्वचिदुन्नतं क्वचिदवनतमिति यावत् अतएव तद्दर्शनात् हृद्युद्गतरतिकेलिकयातिरधीरं चञ्चलं, तथा मणिगणकिरणानां समूहेन समुज्ज्वलैर्भूषणैः सुन्दरं शरीरं यस्य तम् ॥ ३० ॥

श्रीजयदेवभणितविभवद्विगुणीकृतभूषणभारम्।
प्रणमत मनसि निधाय हरिं सुचिरं सुकृतोदयसारम् ॥ ३१ ॥

भोः साधवः हृदि हरिं विनिधाय सुचिरं यथा स्यात्तथा प्रणमत कीदृशं पुण्य विशेषस्य य उदयः फलं तस्य सारभूतं यथा श्रीजयदेवभणितमेव विभवस्तेन द्विगुणीकृतो भूषणभारो यत्र तम्। यैः स्वयमलङ्कृतस्तेऽलङ्काराः जयदेवस्योपमादि वाग्विलासैर्द्विगुणीकृता इत्यर्थः ॥ ३१ ॥

अतिक्रम्यापाङ्गं श्रवणपथपर्य्यन्तगमन-
प्रयासेनैवाक्ष्णोस्तरलतरतारं पतितयोः।
तदानीं राधायाः प्रियतमसमालोकसमये
पपात स्वेदाम्बुःप्रसरइव हर्षाश्रुनिकरः ॥३२॥

अथ श्रीकृष्णस्य राधिकादर्शनानन्दविकारमुक्त्वा श्रीराधिकायास्तद्दर्शनानन्दविकारमाह अतिक्रम्येति। तदानीं श्रीकृष्णावलोकनसमये श्रीराधिकाया अक्ष्णोर्हर्षाश्रुनिकरः पपात, तत्रोत्प्रेक्षते स्वेदाम्बुःप्रसव इव यतोऽतिचञ्चला तारा नेत्रकनीनिका यत्र तद्यथा स्यात्तथा पतितयोः यः कश्चित् पतति सोपि खिन्नः झटित्युत्थाय केनापि किमयं दृष्ट इति तरलतरतारं कृत्वा लज्जया द्विशोऽव-

लोकयतीत्यभिप्रायः तत्रायुत्प्रेचते नेत्रान्तमतिक्रम्य श्रवणपथपर्य्यन्तगमनप्रयासेनैव योऽत्यन्तं गच्छति सोऽपि पतत्येवेत्यर्थः ॥ ३२ ॥

भजन्त्यास्तल्पान्तं कृतकपटकण्डूतिपिहित-
स्मितं याते गेहाद्बहिरवहितालीपरिजने ।
प्रियास्यं पश्यन्त्याः स्मरशरसमाकूतसुभगं
सलज्जा लज्जापि व्यगमदतिदूरं मृगदृशः ॥ ३३ ॥

ततः शय्यान्तिकं गतायाः सख्याः प्रियदर्शनावेशेन लज्जा विजिता इत्याह भजन्त्या इति । तत् सुखानुकूल्ये सावधानो य आलीपरिजन स्तस्मिन् कृतकपटकण्डूत्याच्छादितस्मितं यथा स्यात्तथा गेहाद्बहिर्याते सति मृगदृशः श्रीराधाया लज्जापि सलज्जा सत्यतिदूरं विशेषेणागमत् कीदृश्याः शय्याया निकटं गतायाः अतश्च स्मरशरेण समाकूतं यत्रास्यकटाक्षादिकं तेन सुन्दरं यथा स्यात्तथा प्रियास्यं पश्यन्त्याः प्रियास्य विशेषणम्वा ॥ ३३ ॥

जयश्रीविन्यस्तैर्महित इव मन्दारकुसुमैः
स्वयं सिन्दूरेण द्विपरणमुदा मुद्रित इव ।
भुजापीडक्रीडाहतकुवलयापीडकरिणः
प्रकीर्णासृग्बिन्दुर्जयति भुजदण्डो मुरजितः ॥ ३४ ॥

इति श्रीगीतगोविन्दे अभिसारिकावर्णने सानन्दगोविन्दो
नाम एकादशः सर्गः ।

अथ तथाभिलाषविशेषेणालोच्यमानं श्रीकृष्णस्य भुजदण्डं स्मरन् तत्शौर्य्यं वर्णयति जयश्रीति । मुरजितो भुजदण्डोजयति कीदृशः भुजापीड़स्य क्रीड़या हत कुवलयापीड़करिणः प्रकीर्णा विक्षिप्ता लग्ना इति यावत् असृग्बिन्दवो रक्तविन्दवो यत्र स तत्रोत्प्रेचते जयश्रियार्पितैर्मन्दारकुसुमैरर्चित इव जयश्रीपूजितत्वेन हेतुन उत्प्रेचानन्तरमाह द्विपेन सह संग्रामहर्षेण स्वयं सिन्दूरेण तज्जयख्यापनाय

मुद्रित इव रणाभिमुखश्चेन्मल्लोऽभियाति तदारुणरागेणाङ्कं मुद्रयतीति प्रसिद्धेः। अतएव विप्रलब्धानन्तरप्राप्तानन्देन सहितो गोविन्दो यत्र स इति ॥ ३४ ॥

इति गीतगोविन्द टीकायां एकादशः सर्गः।



## द्वादशः सर्गः।

गतवति सखीवृन्दे मन्दत्रपाभरनिर्भर-
स्मरशरवशाकूतस्फीतस्मितस्नपिताधराम्।
सरसमनसं दृष्ट्वा राधां मुहुर्नवपल्लव-
प्रसवशयने निक्षिप्ताक्षीमुवाच हरिः प्रियाम्॥१

अथ तां प्रेमोल्लासाविष्टामालक्ष्य आत्मानं कृतार्थं मन्यमानः श्रीकृष्णोऽतिदैन्यमाविष्कुर्वन् प्रियामुवाचेत्याह गतवतीति। सखीवृन्दे गतवति सति हरिः प्रियामुवाच किं कृत्वा सरसमनसं तां दृष्ट्वा यतो मन्दो यस्त्रपाभरस्तेन निर्भरो यः स्मरशरस्तद्वशो य आकूतः अभिप्रायस्तेन स्फीतं यत् स्मितं तेन स्नपितोऽधरो यस्या स्ताम् अतएव नवपल्लवरचित विस्तीर्णशय्यायां वारम्बारमर्पिता दृष्टिर्यया ताम् ॥ १ ॥

विभासरागैकतालीतालाभ्यां गीयते।

किसलयशयनतले कुरु कामिनि चरणनलिनविनिवेशम्। तव पदपल्लववैरि पराभवमिदमनुभवतु सुवेशम ॥ क्षणमधुना नारायणमनुगतमनुसर राधिके ॥२॥ ध्रुवम् ॥

अस्य विभासरागैकतालीतालौ । रागलक्षणं यथा-स्वच्छन्दसम्मानितपुष्पचापः प्रियाधरास्वादसुधाभितृप्तः । पर्य्यङ्कमध्यास्य कृतोपवेशो विभासरागः किल हेमगौरः । किमुवाचेत्याह किशलयेत्यादिना । हे राधिके नारीणां समूहो नारं नाराणामयनमाश्रयो यस्तं स्त्रीसमूहाश्रयमपि त्वामनुगतं त्वदेकपरं मामधुना क्षणमनुभज बहुवल्लभोऽप्यहं त्वदेकनिष्ठ इत्यर्थः । अनुभजनमेवाह हे विविधाभिलाषशालिनि किशलयशयनस्योपरि चरणकमलयोर्व्विन्यासं कुरु पूजायाः प्रथमाङ्गमासनमङ्गीकुर्व्वित्यर्थः मत्पूजाकामस्त्वयस्तीति कामिनीशब्दः प्रयुक्तः तेन किं स्यात्तत्राह इदं किशलयशयनं पराजयमनुभवतु कुतोऽस्य पराभवः साध्यस्तत्राह तव पदपल्लवयोरेव वैरि अरुणतादिभिर्गुणैः साम्याकाङ्क्षया वैरित्वमिति ज्ञेयं कीदृशमिव सुवेशं तत्तद्गुणैः शोभनमपि हंसकाद्यलङ्कृतमित्यर्थः ॥ २ ॥

**करकमलेन करोमि चरणमहमागमितासि विदूरम् । क्षणमुपकुरु शयनोपरि मामिव नूपुरमनुगतिशूरम् ॥ ३ ॥**

तदारोहणेन कथं त्वदनुभजनं स्यादतआह अहमात्मनः करकमलेन तव चरणयोरावाहनादिरूपां पूजां करोमि यतस्त्वं विदूरमागमितासि आनीतासि अर्थान्मयेति ज्ञेयं दूरागतस्य पूजायुक्तैवेत्यर्थः तदर्थं क्षणं शयनोपरि नूपुरमिव मामङ्गीकुरु उभयं विशिनष्टि अनुगतौ निपुणम् अनुगतस्य पदे लग्नस्योपकाराचरणं युक्तमेवेत्यर्थः ॥ ३ ॥

**वदनसुधानिधिगलितममृतमिव रचय वचनमनुकूलम् । विरहमिवापनयामि पयोधररोधकमुरसि दुकूलम् ॥ ४ ॥**

पूजानुज्ञां विना पूजा न शुभावहेत्यनुज्ञां प्रार्थयते वदनेति । अमृतमिव वचनं रचय सरसं वदेत्यर्थः कुतोऽमृततत्वं वचनस्य यतो

वदनेन्दोर्गलितं कीदृशं तदनुकूलमेव अमृतवद्भवतीति ननु किमेतावता तवेप्सितं सेत्स्यतीत्याह उरसि दुकूलमपसारयामि उरसीति पञ्चम्यर्थे सप्तमी कुतः पयोधररोधकं कमिव विरहमिव यथा विरहेण पयोधरदर्शनं विच्छिद्यते तथानेनापीति भावः ॥ ४ ॥

**प्रियपरिरम्भणरभसवलितमिव पुलकितमति दुरवापम्। मदुरसि कुचकलसं विनिवेशय शोषय मनसिजतापम् ॥ ५ ॥**

ततो बक्रमवलोकयन्तीं प्रति व्याकुलः सन्नाह प्रियेति। हे प्रिये मदुरसि कुचकलसं स्थापय उरस्येवार्पणे हेतुमाह अतिदुर्लभं दुरवापस्य हृदयेव धारणयोग्यत्वादित्यर्थः तर्हि कथं तत्प्राप्तिरतआह प्रियस्य मम परिरम्भणाय यो रभस उत्साहस्तेन च उच्चलितमिवोत्प्रेक्षे तदपि कुतोऽवगतं पुलकितं यथान्योऽवलोकात् करुणस्तदार्त्ति शमनाय पुलकितोभवति तद्वदयमपीत्यर्थः किमर्थं तन्निवेशनं प्रार्थ्यते तत्राह कामतापं खण्डय रसायनार्पणात्तापोपशान्तिर्भवत्येवेत्यर्थः ॥ ५ ॥

**अधरसुधारसमुपनय भामिनि जीवय मृतमिव दासम्। त्वयि विनिहितमनसं विरहानलदग्धवपुषमविलासम् ॥ ६ ॥**

अन्यथा मे दशमी दशैव स्यादित्याह हे भामिनि वक्रदृष्ट्यवलोकनात् भामिनीत्युक्तम् अधरसुधारसं देहि किमर्थं मृतमिव दासं जीवय मामित्यर्थात् ज्ञेयम् अमृतं दत्वा मृतमिव मां जीवयेत्यर्थः अत्रात्मनोऽनन्यगतिकत्वमाह त्वय्येवार्पितं मनो येन तं ननु ते कापि पीड़ा नोपलभ्यते तत्कथं कथाभूतमात्मानं कथयसि विरहानलेन दग्धं वपुर्यस्य तं तज्ज्ञानं कुतः तत्राह अविलासं विलासाभावादित्यर्थः ॥ ६ ॥

शशिमुखि मुखरय मणिरसनागुणमनुगुण
कण्ठनिनादम् । श्रुतिपुटयुगले पिकरुतविकले
शमय चिरादवसादम् ॥७॥

मौनेन तत्सम्मतिमालक्ष्य लोभादन्यदपि प्रार्थयते हे शशिमुखि ! मणिरसनागुणं मुखरीकुरु कीदृशम् अनुगुणः सदृशः कण्ठनिनादो मणितातादिकं यस्य तत् प्रार्थनाविशेषोऽयं तेन ते किं स्यात् तत्राह मम श्रुतिपुटयुगले चिरकालीनमवसादं शमय श्रुतेः पुटत्वाद्युक्त्या तस्यापनयेन व्रतत्वं बोधितं तदवसाद एव कुतस्तत्राह पिकरुतैर्व्याकुलम् ॥ ७ ॥

मामतिविफलरुषा विकलीकृतमवलोकितुमधुनेदम् । मीलति लज्जितमिव नयनं तव विरम
विसृज रतिखेदम् ॥८॥

मय्यकारणकोपे तव नयनं प्रमाणमिति निगद्य प्रार्थयते इदं तव नयनमधुना मामवलोकयितुं लज्जितमिव मीलति मुद्रितमिव भवति किमिति लज्जितमत आह मय्यकारणकोपेन विकलीकृतम् अन्योऽपि यः कश्चिन्निरपराधं कुपित्वा व्याकुलीकरोति सोपि तन्मुखावलोकनेन लज्जितो भवतीत्यभिप्रायः तर्हि अधुनापि किं करणीयं तदुपदिशेत्याह विरम रोषादिति ज्ञेयं ततो रतौ वाम्यं त्यज ॥८॥

श्रीजयदेवभणितमिदमनुपदनिगदितमधुरिपुमोदम् । जनयतु रसिकजनेषु मनोरमरति
रसभावविनोदम् ॥ ९ ॥

इदं तत्तत् प्रार्थनारूपं श्रीजयदेवभणितं कर्तृ रसिकजनेषु श्रीकृष्णभक्तजनविशेषेषु श्रीकृष्णस्य रतिरसे यो भाव स्तदास्वादरूप स्तेन यो विनोदः सुखं तं जनयतु यतः प्रतिपदं निगदितो मधुरिपोर्मोदो यत्र तत् ॥ ९ ॥

प्रत्यूहः पुलकाङ्कुरेण निविडाश्लेषे निमेषेण च
क्रीड़ाकूतविलोकनेऽधरसुधापाने कथाकेलिभिः
आनन्दाधिगमेन मन्मथकलायुद्धेऽपि यस्मिन्नभू-
दुद्भूतः स तयोर्बभूव सुरतारम्भः प्रियम्भावुकः॥१०

एवं केल्युपकरणसामग्रीं निरूप्योपक्रमसूचितरहःकेलिपर्य्यवसानमाह प्रत्यूहेत्यादिना यस्मिन् सुरतारम्भे प्रत्यूहो विघ्नोऽपि तयोः प्रियम्भावुकः प्रीतिजनकोऽभूत् स सुरतारम्भ उद्भूतो बभूव अन्यत्रारम्भे मध्ये वा प्रत्यूहो दोषजनकोदृष्टः इहतु आदौ मध्येपि प्रत्यूह उत्तरोत्तर क्रीड़ारम्भक एवेति आरम्भकस्याङ्गुतत्वं सूचितम्। कुत्र केन प्रकारेण प्रत्यूह इत्याह निविड़ाश्लेषे कर्त्तव्ये पुलकाङ्कुरेण, क्रीड़ाकूतविलोकने निमिषेण, अधरसुधापाने कथाभिर्नर्म्मभिश्च, मन्मथकलायुद्धे आनन्दावेशविशेषेण, एतेनैतत् केलीनां परमप्रेमविलासत्वं दर्शितम्॥ १०॥

दोर्भ्यां संयमितः पयोधरभरेणापीडितः पाणिजै-
राविद्धो दशनैः क्षताधरपुटः श्रोणीतटेनाहतः।
हस्तेनानमितः कचेऽधरसुधापानेन सम्मोहितः
कान्तः कामपि तृप्तिमाप तदहो कामस्य वामा
गतिः॥ ११॥

न केवलं प्रत्यूह एव बन्धनादिकमपि प्रीतिजनको बभूवेति मध्यमावस्थामाह दोर्भ्यामित्यादि। राधाविविधविलासपूरेण निपुणः स कान्तः श्रीकृष्णः कान्तायाः संयमनादिभिः परिभूतोऽपि कामप्यनिर्व्वचनीयां तृप्तिं प्रतिक्षणं सुखसन्ततिं यद्वातृप्तिमापतत् प्राप्तः तदहो कामस्य दुर्ल्लभतानिवेशकारिणः प्रेम्णो विलक्षणकार्य्योत्पादकतया वामा लोकवशकरी गतिरित्याश्चर्य्यम्। एतदेवोपपादयति दोर्भ्यां बद्धः पयोधरतटेनापीड़ितः नखैराविद्धः दन्तैः क्षतोऽधर-

पुटो यस्य तादृशः कृतः श्रोणीतटेनाहतः इस्तेन केशं धृत्वा नमितः अधरसुधापानेन विकलीकृत इति ॥ ११ ॥

माराङ्के रतिकेलिसङ्कुलरणारम्भे तया साहस-
प्रायं कान्तजयाय किञ्चिदुपरि प्रारम्भि यत्
सम्भ्रमात् । निष्पन्दा जघनस्थली शिथिलिता
दोर्वल्लिरुत्कम्पितं, वक्षो मीलितमक्षि पौरुष-
रसः स्त्रीणां कुतः सिध्यति ॥ १२ ॥

अन्त्यावस्थां सूचयन्नाह माराङ्के इति । रतिकेलिरेव संकुलरणः परस्पराहत संग्रामस्तस्यारम्भे तया प्रकटितातिरतिजनितश्रमातिशयया श्रीराधिकया कान्तजयाय अस्य कान्तस्योपरि साहसप्रायं यत् किञ्चित् अनिर्व्वचनीयं प्रारब्धि तत् संग्रामात् संभ्रमजनितादायासादिति यावत् श्रीराधाया जघनस्थली निष्पन्दा जाता दोर्वल्ली शिथिला, वक्ष उच्चैःकम्पितम्, अक्षि मीलितं, जातावेकत्वं तत्रार्थान्तरन्यासमाह पौरुषरसः सर्व्वावस्थास्वतिभीरुतया प्रसिद्धानां स्त्रीणां कुतः सिद्ध्यति । कीदृशे रणारम्भे माराङ्के केलिपक्षे मारः कामः रणपक्षे मारणम् उभयत्राङ्कं चिह्नम् ॥ १२ ॥

ईषन्मीलितदृष्टिमुग्धहसितं शीत्कारधारावशा-
दव्यक्ताकुलकेलिकाकुविकसद्दन्तांशुधौताधरं ।
श्वासोन्नद्धपयोधरोपरिपरिष्वङ्गी कुरङ्गीदृशो-
हर्षोत्कर्षविमुक्तिनिःसहतनोर्धन्यो धयत्यान-
नम् ॥१३॥

तदन्तस्यारसावेशावसरे प्रियोऽधरं पीतवानित्याह ईषदिति । धन्यमात्मानं मन्यमानः श्रीकृष्णः श्रीराधाया आननं पिबति कीदृश्याः हर्षोत्कर्षस्य विमुक्त्या प्रवृत्या निःसहा धर्त्तुमशक्या तनुर्यस्याः कीदृशः श्वासेन उन्नद्धयोः स्फीतयोरुच्चयोः पयोधरयोरु-

परि परिष्वङ्गो विद्यते यस्य सः। अनेन पाने हेतुगर्भविशेषणान्याह ईषदुन्मिषिता दृष्टिर्यत्र तत् मनोहरं हसितं यत्र तत् तथा शीत्कारस्य या धारा अनवच्छिन्नता तस्या वशादव्यक्ता आकुला या केलिषु काकुस्तया विलसद्भिर्दन्तांशुभिर्धौतो अनुरञ्जितोऽधरो यत्र तत् अनेन रसावेशः सूचितः ॥ १३ ॥

तस्याः पाटलपाणिजाङ्कितमुरो निद्राकषाये-
दृशौ, निर्धौतोऽधरशोणिमा विलुलिताः स्रस्त-
स्रजो मूर्द्धजाः। काञ्चीदाम दरश्लथाञ्चलमिति-
प्रातर्निखातैर्दृशोरेभिः कामशरैस्तदद्भुतमभूत्
पत्युर्मनः कीलितम् ॥ १४ ॥

अथ सुरतान्ते चिह्नशोभितवपुर्दर्शनेन द्विगुणिताभिलास्य प्रियस्य प्रेमोत्सवमाह तस्या इति। तस्या उरः पाटलिपुष्पवत् अरुणनखेनाङ्कितं दृशौ निद्रया बोहिते अधरशोणिमा निर्धौतश्चुम्बनादिना चालितः केशा विलुलिता स्खलाश्च स्रजो बन्धनशैथिल्यादितस्ततो गता इत्यर्थः। काञ्चीदाम ईषत्श्लथप्रान्तमागमत्। प्रातः समये एभिः कामशरैः पत्युर्दृशोर्लग्नैर्मनोविद्धम् इत्येतदद्भुतमभूत् अन्यत्रार्पितशरैरन्यद्विद्धमित्याश्चर्यं तदङ्गं पुनः पुनः पश्यन्न तृप्तिं जगाम इत्यर्थः ॥ १४ ॥

व्यालोलः केशपाशस्तरलितमलकैः स्वेदलोलौ
कपोलौ, स्पष्टा दष्टाधरश्रीः कुचकलसरुचा
हारिता हारयष्टिः। काञ्ची काञ्चिद्गताशां
स्तनजघनपदं पाणिनाच्छाद्य सद्यः, पश्यन्ती
सत्रपं मा तदपि विलुलितस्रग्धरेयं धिनोति १५

तन्मनः कीलितं तस्यैव भावनया द्योतयति व्यालोल इति। इयं श्रीराधिका विमर्हितमालाधारिण्यपि मां प्रीणयति पुनरपि

रत्युत्सुकं करोति न केवलमीदृशी अपिच स्तनजघनपदं सद्यः पाणि-नाच्छाद्य सत्रपं यथा स्यात्तथा मां पश्यन्ती वसनादिव्यतिरेके केव-लाङ्गशोभादर्शनात् प्रीणनमिति ज्ञेयं कुतः सलज्जं पश्यन्तीत्याह केशपाशो व्यालोलो विकीर्ण इत्यर्थः अलकैः स्खलितं कपोलौ स्वेदेन लोलौ व्याप्तावित्यर्थः दष्टो योऽधरस्तस्य शोभा स्पष्टा कुचकलसयो रुचा स्पर्द्धयेव हारयष्टिर्हारिता काञ्ची काञ्चिदाशां गता रसा-वेशशैथिल्ये निजाङ्कत्वणादात्मनः क्रीड़ा विशेषावेशावकलनात् सत्र-पत्वमित्यभिप्रायः ॥ १५ ॥

**इति मनसा निगदन्तं सुरतान्ते सा नितान्त-खिन्नाङ्गी । राधा जगाद सादरमिदमानन्देन गोविन्दम् ॥१६॥**

एवं प्रियादर्शनानन्दोन्मत्तं प्रियं जगादेत्याह इतीति । सा श्रीराधा गोविन्दमानन्देन आनन्दावेशेन इदं वक्ष्यमाणं जगाद कीदृशम् इत्यु-क्तप्रकारं मनसा निगदन्तम् अतएव आदरेण सह वर्त्तमानम् अस्मा-नोर्द्धं प्रत्यङ्गदर्शनादिति ज्ञेयं कीदृशी सुरतान्ते नितान्तखिन्नाङ्गी ॥ १६ ॥

रामकिरीरागयतितालाभ्यां गीयते ।

**कुरु यदुनन्दन शिशिरतरेण करेण पयोधरे । मृगमदपत्रकमत्र मनोभवमङ्गलकलससहोदरे ॥ निजगाद सा यदुनन्दने क्रीडति हृदयानन्दने ॥ १७ ॥ ध्रुवम् ॥**

यज्जगाद तदेवाह यदुनन्दनेत्यादिना । अस्यापि रामकिरीराग-यतितालौ । यदुनन्दने क्रीड़ति सति सा श्रीराधा निजगाद तं प्रतीति प्रकरणाज्ज्ञेयं क्रीड़ति इति सुरतान्तेपि चिक्रीड़िषोद-यादखण्डलीलत्वमुक्तम् इच्छामात्रेण कथं क्रीड़नं सेत्स्यतीति तत्राह तस्या हृदयमानन्दयति स्वचापल्येन क्रीड़नायोन्मुखं करोति यस्मि-न्स्मिन् क्रीड़ति जगादेति क्रीड़नसमयेपि प्रियप्रेरणात्तस्या नित्यत्वा

धीनभर्तृकात्वे प्राधान्यं द्योतितं हे यदुनन्दन! इत्युक्तिरीत्या महाकुलोद्भवत्वेन सर्व्वातिशायि नायकगुणख्यापनाय सम्बोधनं यदि पुनर्म्मनोभवमखारम्भः सम्भवति तदा मम पयोधरे कस्तूरीपत्रभङ्गं करेण कुरु कथं तत्र तत्करणीयमतआह कामस्य यो मङ्गलकलसस्तत् सदृशे मङ्गलकलसोपि तथा विधानेन स्थाप्यते अतस्त्वमपि कुर्व्वित्यर्थः कीदृशेन चन्दनादप्यतिशीतलेन शीतलत्वेनाव्यग्रतया करणायोग्यता सूचिता ॥ १७ ॥

**अलिकुलगञ्जनसञ्जनकं रतिनायकशायकमोचने। त्वदधरचुम्बितकज्जलमुज्ज्वलय प्रिय लोचने ॥ १८ ॥**

ततश्च तदुपकरणान्यापादयेत्याह अलीति। हे प्रिये! लोचने त्वदधरचुम्बनेन लम्बितं गलितं कज्जलमुज्ज्वलय अर्पयेत्यर्थः कीदृशम् अलिकुलगञ्जनं सञ्जनयति इति तादृशं कीदृशे कामवाणान् कटाक्षरूपान् मोचयतीति मोचनं तस्मिन् कज्जलादिकमपि तत्रापेक्षितमिति भावः ॥ १८ ॥

**नयनकुरङ्गतरङ्गविकाशनिरासकरे श्रुतिमण्डले। मनसिजपाशविलासधरे शुभवेश निवेशय कुण्डले ॥१६॥**

हे शुभवेश! मम नयनमेव कुरङ्गस्तस्य तरङ्गकूर्द्दनं तस्य यः प्रकाशस्तस्य निरासकरं यत् श्रुतिमण्डलं तस्मिन् कुण्डले अर्पय कुतस्तन्निराकरणं श्रुतेरतआह मनसिजपाशस्य विलासधरे पाशो मृगबन्धनरज्जुस्तद्विलासं धरतीत्यर्थः शुभकर्म्मणि कृतवेशस्य तव प्रियत्वान्ममापि तथा वेशकरणं युक्तमित्यभिप्रायः ॥ १६ ॥

**भ्रमरचयं रचयन्तमुपरि रुचिरं सुचिरं मम सम्मुखे। जितकमले विमले परिकर्म्मय नर्म्मजनकमलकं मुखे ॥२०॥**

तथा मम मुखे अलकं संकुरु तत्र हेतुः सखीपरिहासजनकं यतः सम्मुखे सुचिरं कालं व्याप्य मुखकमलस्योपरि भ्रमरचयं रचयन्तम् अतएव रुचिरं कीदृशे जितकमले अतो विमले मुखस्य कमलत्वेनालकस्य भ्रमरत्वेन निरूपितम् ॥ २० ॥

मृगमदरसवलितं ललितं कुरु तिलकमलिकरजनीकरे। विहितकलङ्ककलं कमलानन विश्रमितश्रमशीकरे ॥२१॥

हे कमलानन ! मम ललाटचन्द्रे मृगमदरसेन वलितं तिलकं ललितं यथा स्यात्तथा कुरु कीदृशं कृता कलङ्कस्य कला अंशो येन तत् ललाटस्य बालचन्द्रत्वेन मृगमदतिलकस्य कलङ्ककलात्वेन निरूपितं कीदृशे विश्रमिता अपगता अम्बुकणा यतस्तस्मिन् तान् अपनीय तिलकं कुर्वित्यर्थः ॥ २१ ॥

मम रुचिरे चिकुरे कुरु मानद मानसजध्वजचामरे। रतिगलिते ललिते कुसुमानि शिखण्डिशिखण्डकडामरे ॥२२॥

हे मानद ! मम केशेषु कुसुमानि कुरु कीदृशे सम्भोगावेगगलिते विकीर्णे तथा ललिते यतः स्वरूपतः सुन्दरे तथा मनसिजस्य यो ध्वजस्तस्य चामरे किञ्च मयूरपुच्छस्येव डामरः आटोपो यस्य तस्मिन् मानसजध्वजादाटोपनादिकमपि तदुपयोग्यमेवेत्यर्थः ॥ २२ ॥

सरसघने जघने मम सम्बरदारणवारणकन्दरे। मणिरसनावसनाभरणानि शुभाशय वासय सुन्दरे ॥२३॥

तथाच हे शुभाशय शुद्धान्तःकरणस्तेत्र क्रियाविशेषस्तथाशब्दः प्रयुक्तः मम जघने मणिरसनावसनाभरणानि परिधापय यतः सुन्दरे

तादृशस्यैव तत्करणं युक्तमित्यर्थः तथा सरसघने सरसञ्च तत् घनञ्चेति तस्मिन् अपिच कामएव हस्ती तस्य कन्दरूपे ॥ २३ ॥

श्रीजयदेववचसि जयदे हृदयं सदयं कुरु मण्डने।
हरिचरणस्मरणामृतकृतकलिकलुषज्वरखण्डने
॥२४॥

श्रीजयदेववचसि सदयं यथा स्यात्तथा हृदयं कुरु स्निग्धान्तःकरणस्यैव एतत् श्रवणयोग्यत्वादित्यर्थः यतो जयं श्रीकृष्णं ददातीति जयदस्तस्मिन् तत्र हेतुः हरिचरणस्मरणमेव अमृतं तेन कृतं कलिकलुषज्वरेण यः सन्तापस्तस्य खण्डनं येन तस्मिन् अतएव मण्डने भूषणरूपे यास्तद्विरक्ताः शरशोभना मता इत्युक्तेः ॥ २४ ॥

रचय कुचयोः पत्रं चित्रं कुरुष्व कपोलयो-
र्घटय जघने काञ्चीमञ्च स्रजा कबरीभरम् ।
कलय वलयश्रेणीं पाणौ पदे कुरु नूपुरा-
विति निगदितः प्रीतः पीताम्बरोऽपि तथाकरोत्
॥२५॥

अत्यावेशेन तया पुनरुक्तः सन् तथाकरोदित्याह रचयेति। रचय कुचयोः पत्रमित्यादिकम् इत्यनेन प्रकारेण तया आज्ञप्तः पीताम्बरोपि प्रीतस्तथैवाकरोत् अपिशब्देन रतान्तर्वसनव्यत्ययाभावेऽपि तदा धारणात्तस्या खण्डितत्तदधीनत्वं दृढीकृतम् ॥ २५ ॥

पर्य्यङ्कीकृतनागनायकफणाश्रेणीमणीनां गणे
संक्रान्तप्रतिबिम्बसम्बलनया बिभ्रद्विभुप्रक्रियाम्।
पादाम्भोरुहधारिवारिधिसुतामक्ष्णां दिदृक्षुः
शतैः कायव्यूहमिवाचरन्नुपचितीभूतो हरिः
पातु वः ॥ २६ ॥

अथ श्रीराधिकायाः पूर्व्वोक्तदर्शनात्तृप्त्युत्कण्ठावगुण्ठितः श्रीकृष्णो नैतवाङ्गुल्यमन्विच्छन् श्रीनारायणस्य लक्ष्मीदर्शनं श्लाघितवानिति स्मरन् कविः आशिषं प्रयुङ्क्ते पर्य्यङ्कीकृतेति। हरिर्नारायणो वो युष्मान् पातु कीदृशः कायव्यूहमाचरन्निवोपचितीभूतोऽर्द्धिं प्राप्तइत्युत्प्रेक्षे तत्र हेतुः पादाम्भोरुहधारिवारिधिसुतां लक्ष्मीम् अक्ष्णां शतैर्द्रष्टुमिच्छुः तत्प्रकारमाह तल्पीकृतस्य शेषस्य फणाश्रेण्यां ये मणयस्तेषां गणे मिलितानां प्रतिविम्बानां प्रसरणेन विभु प्रक्रियां सर्वव्यापिभावं विभ्रत् ॥ २६ ॥

त्वामप्राप्य मयि स्वयम्बरपरां क्षीरोदनीरोदरे
शङ्के सुन्दरि कालकूटमपिवन्मूढो मृडानीपतिः ।
इत्थं पूर्व्वकथाभिरन्यमनसो निक्षिप्य वक्षोऽञ्चलं
राधायास्तनकोरकोपरि मिलन्नेत्रो हरिः
पातु वः ॥ २७ ॥

एवं चिन्तयन्नत्युच्छलितोत्कण्ठया तदवलोकनाय तस्या वैचित्त्यापत्त्यै पुनः श्रीनारायणचरितवर्णनकौतुकमातनोदिति स्मरन् पुनराशिषयति त्वामिति। हरिः श्रीकृष्णो वो युष्मान्पातु कीदृशः श्रीराधाया वक्षोऽञ्चलम् अपसार्य्य स्तनकोरकोपरि मिलन्नेत्रः कीदृश्याः हे सुन्दरि! क्षीरसमुद्रस्य नीरमध्ये त्वामप्राप्य शिवो मूढः सन् कालकूटं विषमपिवत् इत्यूह्यं शङ्के इत्यनेन प्रकारेण पूर्वकथाभिस्तदश्रुतपूर्व्वाभिर्विक्षिप्तचित्तायाः कीदृशीं त्वां मयि स्वयम्बरपराम् ॥ २७॥

यद्गान्धर्व्वकलासु कौशलमनुध्यानञ्च यद्वैष्णवं
यच्छृङ्गारविवेकसारमपि यत् काव्येषु लीलायितम् । तत् सर्व्वं जयदेवपण्डितकवे कृष्णैकतानात्मनः सानन्दाः परिशोधयन्तु सुधियः श्रीगीतगोविन्दतः ॥ २८॥

अथोद्दीपन संहारेऽपि स्वाभीष्टोपासनायाः सर्व्वोत्तमता निश्चयावेशेन कारुण्योदयात्तत्सन्दिहानान् भक्तिरसिकजनान् प्रत्याह यद्गान्धर्व्वेति। भोः सुधियः श्रीकृष्णभक्तिरसवासितचित्ताः पण्डाः सदसद्विवेचिका बुद्धिस्तयान्वितः कविः सत्काव्यकर्त्ता तथाभूतस्य श्रीजयदेवपण्डितकवेः श्रीगीतगोविन्दतः तत्सर्व्वमानन्देन सहिताः परि सर्वतोभावेन शोधयन्तु आगङ्गापङ्क्तमुद्धारयन्तु निश्चिन्वन्तु इत्यर्थः तत्किमित्याह यत् गान्धर्व्वकलासु संगीतशास्त्रोक्तस्वरगीतरागतालादिषु यन्नैपुण्यं तदेव निबन्धनानुसारेण जानन्तु इत्यर्थः न केवलमेतदपितु यद्वैष्णवं सर्वव्यापनशीलस्य विष्णोः सर्व्वावतारिणोऽचिन्त्यानन्तशक्तेः स्वयं भगवतः श्रीकृष्णस्य भजनविषयं यदनुध्यानं स्वाभीष्टताचिन्त्यलीलाविचारसमाधानादनुचणचिन्तनं तदप्येतत् दृष्ट्वैव निश्चिन्वन्तु नित्यत्वसर्व्वोत्तमत्व निश्चयात् दृढ़ीकुर्वन्तु इत्यर्थः तत्रापि दुरूहगतेः शृङ्गारस्य महाप्रेमरसस्य विचारे यत्तत्त्वं दुरूहातिदुरूहव्रजलीलागतं तदप्येतदनुसारेण महाभावपर्य्यन्तं निश्चिन्वन्तु काव्येषु यल्लीलायितं रसलीलादिव्यञ्जकविशेषग्रथनं तदप्येतदनुसारेण निश्चिन्वन्तु सर्वत्र हेतुः श्रीकृष्णे एकतानः एकाग्रोऽनन्यवृत्तिरात्मा मनो यस्य तस्य श्रीकृष्णैकान्तभक्तस्यैव सर्वगुणाश्रयत्वादित्यर्थः यस्यास्ति भक्तिर्भगवत्यकिञ्चने इत्युक्तेः ॥ २८ ॥

**साध्वी माध्वीक चिन्ता न भवति भवतः शर्करे कर्करासि, द्राक्षे द्रक्ष्यन्ति के त्वाममृत मृतमसि क्षीर नीरं रसस्ते। माकन्द क्रन्द कान्ताधर धरणितलं गच्छ यच्छन्ति यावद्भावं शृङ्गारसारस्वतमिह जयदेवस्य विष्वग्वचांसि ॥ २९॥**

अथ हृद्रोगमाश्विति शुकोक्तिवत् प्रामाण्यादेतत् श्रवणकीर्त्तनस्मरणानुमोदनप्रकारमाह साध्वीति। हे माध्वीक इह लोके यावत् जयदेवस्य वचांसि विष्वक् सर्वतः शृङ्गारसारस्वतं भावं ददति तावद्भवतश्चिन्ता साध्वी न भवति मधुरत्वेपि मादकत्वादित्यर्थः। हे

शर्करे त्वं कर्कराशि मादकत्वाभावेपि कठिनत्वादित्यर्थः । हे द्राक्षे ! के त्वां द्रक्ष्यन्ति कोमलत्वेपि निन्द्यदेशोद्भवत्वादित्यर्थः । हे अमृत ! त्वं मृतमसि मरणान्तरप्राप्यत्वादित्यर्थः । हे क्षीर ! ते रसो नीरं नीरवत् आवर्त्तनाद्यपेक्षत्वात् । हे माकन्द ! आम्र त्वं क्रन्द त्वगष्ठ्यादिहेयांशसाहित्यात् । हे कान्ताधर ! त्वं पातालमसुरालयं याहि अधोगत्यनामत्वात् तवात्वस्थितिरपि न युक्तेत्यर्थः । श्रीजयदेववर्णितमधुराख्यभक्तिरसास्वादनिर्वृतजनास्ते घृणामेव करिष्यन्तीतिभावः ॥ २९ ॥

## श्रीभोजदेवप्रभवस्य वामादेवीसुतश्रीजयदेवकस्य । पराशरादिप्रियबन्धुकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ॥ ३० ॥

## इति श्रीजयदेवकृतौ श्रीगीतगोविन्दे स्वाधीनभर्तृकावर्णने सुप्रीतपीताम्बरो नाम द्वादशः सर्गः ।

अथ पितृमातृस्मरणपूर्वकं पराशरादिमतज्ञातार एवास्याधिकारिण इति तान् प्रति आशिषयति भोजदेव नामास्य पिता वामादेवी नाम्नी जननी तस्याः सुतस्य श्रीजयदेवकस्य पराशरादीनां ये प्रियास्तन्मतज्ञातारस्तेष्वपि ये बान्धवास्तन्मतानुसारेण श्रीराधामाधवकेलिज्ञानेन बन्धुत्वं प्राप्ताः तेषामेव कण्ठे भूषणवत् सदा श्रीगीतगोविन्दाख्यं कवित्वमस्तु अनेनास्य प्रबन्धस्य सर्ववेदेतिहासपुराणादिकर्तॄणां सम्मत्या सर्वसारत्वं दुरूहत्वञ्च बोधितं तत्रायं क्रमः आदौ श्रीकृष्णस्य श्रेष्ठताप्रतिपादनं प्रलयपयोधिजलेत्यादि वसन्ते वासन्तीत्यन्तेन । ततः श्रीराधिकायाः समधिक लालसावर्णनं कंसारिरपीत्यन्तेन । ततः साधारणलीला तस्या उत्कण्ठावर्णनञ्च ततः श्रीकृष्णस्याप्युत्कण्ठा यमुनातीरेत्यन्तेन । ततः श्रीकृष्णे राधिकोत्कण्ठा अहमिहेत्यन्तेन । ततस्तस्यां श्रीकृष्णोत्कण्ठावर्णनं पूर्वं यत्रेत्यन्तेन । ततोऽस्याभिसारिकावस्थावर्णनं अथ तामित्यन्तेन । ततो वासकसज्जा अत्रान्तरेत्यन्तेन । ततश्चन्द्रोदयात् पुनरुत्कण्ठा अथागतमित्यन्तेन । ततो विप्रलब्धा अथ कथमपीत्यन्तेन । ततः खण्डिता तामथेत्यन्तेन ।

ततः कलहान्तरिता अत्रान्तरे मसृणरोषेत्यन्तेन। ततो मानिनी वर्णनं सुचिरेत्यन्तेन। ततो मेघावृते चन्द्रे सखी प्रार्थना सा ससाध्वसेत्यन्तेन। ततो विप्रलब्धा अन्योन्यावलोकनं गतवतीत्यन्तेन। ततः श्रीकृष्णप्रार्थना प्रत्यूहेत्यन्तेन। ततो रहःकेलय इति मनसेत्यन्तेन। ततः स्वाधीनभर्तृका पर्य्यङ्कीकृतेत्यन्तेन। ततः सर्गोऽयं सन्दङ्गिमदाख्यसम्भोगरसानन्दितः श्रीपीताम्बरो यत्र स इति॥ ३०॥

यद्वत् स्वबालमुग्धोक्तौ पिता प्रीतिवराप्यते।
तद्वत् श्रीकृष्णचैतन्यः प्रीयतामत्र जल्पिते॥
गोविन्दपादसेवायाः प्रभावादुदिता स्वयम्।
चैतन्य दासतो बालबोधिनी स्यात् सतां मुदे॥

इति श्रीगीतगोविन्दटीकायां द्वादशः सर्गः।

समाप्तोऽयं ग्रन्थ

---

# विज्ञापनम्।

| संस्कृतम्। | रु० |
|---|---|
| चक्रदत्तः | २ |
| सूर्य्यसिद्धान्तः | १ |
| भाषापरिच्छेदः | ० |
| शिशुपालवधम् | ६ |
| मुक्तिकोपनिषत् | ० |
| मेघदूतम् | ० |
| रघुवंशम् | २ |
| कुमारसम्भवम् | ० |
| नलोदयः | ० |
| ऋतुसंहारः | ० |
| चरकसंहिता, १।२यखण्डम् | २ |
| किरातार्ज्जुनीयम् | २ |
| पूर्व्वनैषध चरितम् १।२।३यखण्डम् | २ |
| श्रीमद्भगवद्गीता | ६ |
| वेणीसंहारः | ० |
| सुश्रुतः आयुर्व्वेदः | ४ |
| विवेकचूड़ामणिः | ० |
| उत्तरकुमारसम्भवम् | ० |
| साहित्यदर्पणः | १ |
| किरातार्ज्जुनीयम्, मूलमात्रम् | ० |
| दशकुमारचरितम्, पूर्व्वोत्तरखण्डद्वयम् | १ |
| वसन्ततिलकभाणः | ० |
| धातुमञ्जरी, | ० |
| अभिज्ञानशाकुन्तलम् | ० |
| सूर्य्यशतकम् | ० |
| गीतगोविन्द जयदेवगोस्वामि विरचितम् | ० |
| भामिनीविलास पण्डितराजजयन्नाथ विरचितम् | ० |
| पिङ्गलाचार्य्यकृत छन्दशास्त्रःभाष्यसहितम् १मखण्ड | ० |
| शार्ङ्गधर संहिता (आयुर्व्वेदः) १म खण्ड | ० |
| संस्कृत वर्णपरिचय प्रथमोभागः | ० |
| चाणक्य श्लोक चाणक्यपण्डित संग्रहीतम् | ० |
| शृङ्गारतिलक महाकवि कालिदास प्रणीतम् | ० |

# मेघदूतम्

महाकवि कालिदास कृतम्

श्रीमल्लिनाथ सूरिविरचितया सञ्जीवनी
समाख्ययानुगतम्

श्रीयुक्तबाबुभुवनचन्द्रवसाकमहोदयस्य
प्रार्थनया
नवद्वीपनिवासि
श्रीअजितनाथन्यायरत्नेन
परिशोधितम्

कलिकातानगरे
श्रीयुतबाबुभुवनचन्द्रवसाकसंस्थापित संवादज्ञान-
रत्नाकराख्य यन्त्रे तद्द्वारैव
१८२६ संवत्सरे
प्रकाशितम् ।
( निमतला घाट ष्ट्रीट ८ संख्यक भवन )

# मेघदूतम्

महाकवि कालिदास कृतम्



श्रीमल्लिनाथ सूरिविरचितया सञ्जीवनी

समाख्यायानुगतम्



श्रीयुक्तबाबुभुवनचन्द्रवसाकमहोदयस्य

प्रार्थनया

नवद्वीपनिवासि

श्रीअजितनाथन्यायरत्नेन

परिशोधितम्



कलिकातानगरे

श्रीयुतबाबुभुवनचन्द्रवसाकसंस्थापित संवादज्ञानरत्नाकराख्य

यन्त्रे तद्द्वारैव

१८२६ संवत्सरे

प्रकाशितम्।

[ निमतला घाट ष्ट्रीट ८ संख्यक भवन। ]

# विज्ञापनम् ।



भारतेऽस्मिन् भारतीवरपुत्रतया प्रथितस्य कविकुलशिरोमणेः कालिदासस्य काव्यमलौकिककवित्वशक्तिञ्च सर्व्वत्रोत्कृष्टतया प्रचरतीति सतां सुप्रसिद्धेरलमत्र तत्प्रतिपादनप्रयत्नेन । काव्यामृतपिपासूनां तृष्णातिशयमाकलय्यैवानेनैव बहुकाव्यप्रपा निरमायि यत्र चाविश्य बहवोऽमृतरसं स्वादं स्वादं हृदयारविन्दमानन्दयन्तस्तृप्यन्ति ।

साम्प्रतमेतत्प्रणीतं मल्लिनाथविरचितटीकासहितं मेघदूतकाव्यमत्रमुद्रितं तच्च नानास्थानतः पुस्तकानि समाहृत्य विविच्य च यथाश्रममस्माभिः संस्कृतं यद्येतत् पाठकानां मुदमादधाति तदैव वयं श्रमसाफल्यं पश्येम । अत्र चेत्प्रमादतः केषाञ्चित् वर्णानां विपर्य्ययो न्यूनत्वं वा घटते तच्च परिशोध्य सकरुणनयनैरालोकनीयमिति ।

इदमपि सर्व्वान् विज्ञापयामः यद्यपि बहुषु स्थानेषु बहुतराणि संस्कृतपुस्तकानि मुद्रितानि तानि चानल्पमूल्यतया साधारणैः क्रेतुं न समर्थ्यन्ते इति विभाव्य कारुण्यरसपूरितान्तःकरणेन श्रीमता भुवनचन्द्रेण वसाकोपाधिना प्रत्येकं यथोचितमूल्यं निर्णीय बहुतर संस्कृत पुस्तकानि मुद्रितानि सन्ति चात्र विक्रयणार्थं मुद्रितेषु बहुषु केषाञ्चित् कस्यवा पुस्तकस्य प्रयोजनं स्यात् तदाऽत्र संवादज्ञानरत्नाकरे यन्त्रालये स्वयमागते पत्रिकायां प्रेरितायां वा स्वल्पमूल्येनैवप्राप्तव्यमिति, किमधिकेन ॥

इति शकाब्दाः १७६७ आषाढ़स्य द्वाविंशति दिने ।

नवद्वीपनिवासि

श्रीअजितनाथशर्म्मणः ॥

# मेघदूतटीकासञ्जीवनी ।

## मङ्गलाचरणम् ।

मातापितृभ्यां जगतो नमो वामार्द्धजानये ।
सद्यो दक्षिणदृक्पातसंकुचद्वामदृष्टये ॥ १ ॥
अन्तरायतिमिरोपशान्तये शान्तपावनमचिन्त्यवैभवम् ।
तन्नरं वपुषि कुञ्जरं मुखे मन्महे किमपि तुन्दिलं महः ॥ २ ॥
शरणं करवाणि शर्म्मदं ते चरणं वाणि! चराचरोपजीव्यम् ।
करुणामसृणैः कटाक्षपातैः कुरु मामम्ब! कृतार्थसार्थवाहम् ॥ ३ ॥

## प्रतिज्ञा ।

इहान्वयमुखेनैव सर्व्वं व्याख्यायते मया ।
नामूलं लिख्यते किञ्चिन्नानपेक्षितमुच्यते ॥ ४ ॥
भारती कालिदासस्य दुर्व्याख्याविषमूर्च्छिता ।
एषा सञ्जीवनी व्याख्या तामद्योज्जीवयिष्यति ॥ ५ ॥

# मेघदूतम् ।

## पूर्वमेघः ।

कश्चित् कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तंगमितमहिमा वर्षभोग्येण भर्त्तुः ।
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसतिं रामगिर्य्याश्रमेषु ॥ १ ॥

---

आशीर्नमस्क्रियावस्तुनिर्देशोवापि तन्मुखमिति शास्त्रात् काव्यादौ वस्तुनिर्द्देशात् कथां प्रस्तौति । कश्चिदिति । स्वाधिकारात् स्वनियोगात् प्रमत्तो ऽनवहितः । प्रमादोऽनवधानतेत्यमरः । जुगुप्सा विरामप्रमादार्थानामुपसंङ्ख्यानमित्यपादानत्वात्प ञ्चमी । अतएवापराधाद्धेतोः कान्ताविरहेण गुरुणा दुर्भरेण दुस्तरेणेत्यर्थः । गुरुस्तु गीष्पतौ श्रेष्ठे गुरौ पितरि दुर्भरे इति विश्वः । वर्षं संवत्सरं भोग्येन । कालाध्वनोरत्यन्तसंयोगइति द्वितीया । अत्यन्तसंयोगे चेति समासः । कुमति चेति णत्वम् ।

तस्मिन्नद्रौ कतिचिदबलाविप्रयुक्तः स कामी
नीत्वा मासान् कनकवलयभ्रंशरिक्तप्रकोष्ठः।

---

भर्तुः स्वामिनः शापेन अस्तंगमितो महिमा सामर्थ्यं यस्य सोऽस्तंगमितमहिमा। अस्तमिति मकारान्त मव्ययं तस्य द्वितीयेतियोगविभागात्समासः। कश्चि दनिर्द्दिष्टनामा यक्षो देवयोनिविशेषः। विद्याधरा प्सरोयक्षरक्षोगन्धर्व्वकिन्नराः। पिशाचोगुह्यकः सिद्धो भूतोऽमी देवयोनयइत्यमरः। जनकतनयायाः सीतायाः स्नानैरवगाहनैः पुण्यानि पवित्राणि उद कानि येषु तेषु पावनेष्वित्यर्थः। छायाप्रधानास्त रवः छायातरवः शाकपार्थिवादित्वात्समासः। स्निग्धाः सान्द्राः छायातरवो नमेरुवृक्षा येषु तेषु वसतियोग्येष्वित्यर्थः। स्निग्धन्तु मसृणे सान्द्रे इति छायावृक्षोनमेरुः स्यादिति च शब्दार्णवः। रामगि रेश्चित्रकूटस्य आश्रमेषु वसतिं चक्रे कृतवान्। अत्र नगनगरार्णवादिवर्णनासद्भावान्महाकाव्यत्वम्। रसो विप्रलम्भाख्यः शृङ्गारः तत्राप्युन्मादावस्था। अतए वैकत्रानवस्थानं सूचितम् आश्रमेष्विति बहुवच नेन। सीतां प्रति रामस्य हनूमत्सन्देशं मनसि निधाय मेघसन्देशं कविः कृतवानित्याहुः। अत्र काव्ये सर्व्वत्र मन्दाक्रान्ता वृत्तम्। मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौ ताद्गुरू चेदिति॥ २॥

आषाढ़स्य प्रथमदिवसे मेघमाश्लिष्टसानुं
वप्रक्रीड़ापरिणतगजप्रेक्षणीयं ददर्श ॥ २ ॥

---

तस्मिन्निति। तस्मिन्नद्रौ चित्रकूटाख्ये अबला विप्रयुक्तः कान्ताविरही कनकस्य वलयः कटकम्। कटकं वलयोऽस्त्रियामित्यमरः। तस्य भ्रंशेन पातेन रिक्तः शून्यः प्रकोष्ठः कूर्परादधःप्रदेशो यस्य स तथोक्तः। कक्षान्तरे प्रकोष्ठः स्यात् प्रकोष्ठः कूर्परादध इति शाश्वतः। विरहदुःखात् कृशइत्यर्थः। कामी कामुकः स यक्षः कतिचिन्मासानष्टौ मासानित्यर्थः मासानन्यान् गमय चतुरइति वक्ष्यमाणत्वात्। नीत्वा यापयित्वा आषाढाभिर्नक्षत्रेण युक्ता पौर्णमासी आषाढी। नक्षत्रेण युक्तःकालइत्यण् टिड्ढाणञित्यादिना ङीप् साषाढ्यस्मिन् पौर्णमासीत्याषाढो मासः। सास्मिन् पौर्णमासीति संज्ञायामित्यण्। तस्य प्रथमदिवसे आश्लिष्टसानुमाक्रान्ततटम् वप्रक्रीडा उत्खातकेलयः। उत्खातकेलिः क्रीडादौ र्वप्रक्रीडा निगद्यतइति शब्दार्णवः। तासु परिणतस्तिर्य्यग्दन्तप्रहारः। तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतइति हलायुधः। स चासौ गजश्च तमिव प्रेक्षणीयं दर्शनीयं मेघं ददर्श। गजप्रेक्षणीयमित्यत्रैवलापाल्लुप्तोपमा। केचिदाषाढस्य प्रथमदिवसइत्यत्र प्रत्यासन्ने नभसीति वक्ष्यमाणनभो

तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतो
रन्तर्वाष्पश्चिरमनुचरोराजराजस्य दध्यौ।

मास प्रत्यासत्त्यर्थं प्रथमदिवसइति पाठं कल्पयन्ति तदसङ्गतं प्रथमातिरेके कारणाभावात्। नभोमासस्य प्रत्यासत्त्यर्थमित्युक्तमिति चेन्न प्रत्यासत्तिमात्रस्य मासप्रत्यासत्त्यैव प्रथमदिवसस्याप्युपपत्तेः अत्यन्त प्रत्यासत्तेरुपयोगाभावेनाविवक्षितत्वात् विवक्षितत्वे वा स्वपक्षेपि प्रथमदिवसातिक्रमणे मेघदर्शनकल्पनायाम् प्रमाणाभावेन तदसम्भवात् प्रत्युताश्लत्वक्षे एव कुशलसन्देशस्य भाव्यनर्थप्रतीकारार्थस्य पुरतएवानुमानमुक्तं भवतीत्युपयोगसिद्धिः। नन्वन्मत्तस्य नायं विवेकइति चेन्न उन्मत्तस्य नानर्थस्य प्रतीकारार्थं प्रवृत्तिरपीति सन्देशएव माभूत् तथा च काव्यारम्भएवाप्रसिद्धः स्यादित्यहोमूलोच्छेदी पाण्डित्यप्रकर्षः। कथं तर्हि शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणावित्यादिना भगवत्प्रबोधावधिकस्य शापस्य मासचतुष्टयावशिष्टस्योक्तिः दशदिवसाधिकत्वादिति चेत् स्वपक्षेपि कथं सा विंशतिदिवसैन्यूनत्वादिति सन्तोष्टव्यम्। तस्मादीषद्वैषम्यमविवक्षितमिति सुष्ठूक्तं प्रथमदिवसइति॥ २॥

तस्येति। राजानो यक्षाः। राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रिय शक्रयोरिति विश्वः। राज्ञां

मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ ३ ॥

---

राजा राजराजः कुवेरः । राजराजो धनाधिप इत्यमरः । राजाहःसखिभ्यष्टच् इति टच् प्रत्ययः । तस्यानुचरो यक्षः अन्तर्वाष्पो धीरोदात्तत्वादन्तःस्तम्भिताश्रुः सन् कौतुकाधानहेतोरभिलाषोत्पादकारणस्य । कौतुकञ्चाभिलाषे स्यादुत्सवे नर्म्महर्षयोरिति विश्वः । तस्य मेघस्याग्रे कथमपि गरीयसा प्रयत्नेनेत्यर्थः । ज्ञानहेतुविवक्षायामपादि कथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरववाढयोरित्युज्ज्वलः । स्थित्वा चिरं दध्यौ चिन्तयामास । ध्यै चिन्तायामितिधातोर्लिट् । मनो विकारोपशमनपर्य्यन्तमिति शेषः । विकारहेतुमाह तथाहि मेघालोके मेघदर्शने सति सुखिनो पि प्रियादिजनसङ्गतस्यापि चेतः चित्तम् अन्यथाभूता वृत्ति व्यापारो यस्य तदन्यथावृत्ति भवति विकृतिमापद्यत इत्यर्थः । कण्ठाश्लेषप्रणयिनि कण्ठालिङ्गनार्थिनि जने दूरे संस्था स्थितिर्यस्य तस्मिन् दूरसंस्थे सति किं पुनः विरहिणः किमुत वक्तव्यमित्यर्थः । विरहिणां मेघसन्दर्शनमुद्दीपनं भवतीति भावः । अर्थान्तरन्यासोऽलङ्कारः तदुक्तं दण्डिना । ज्ञेयः सोऽर्थान्तरन्यासो वस्तु

प्रत्यासन्ने नभसि दयिताजीवितालम्बनार्थी
जीमूतेन स्वकुशलमयीं हारयिष्यन् प्रवृत्तिम् ।
स प्रत्यग्रैः कुटजकुसुमैः कल्पितार्घाय तस्मै
प्रीतः प्रीतिप्रमुखवचनं स्वागतं व्याजहार ॥ ४ ॥

---

प्रस्तुत्य किञ्चन । तत्साधनसमर्थस्य न्यासो योऽन्यस्य वस्तुन इति ॥३॥

अथ समाहितान्तःकरणः सन् किं कृतवानित्याह प्रत्यासन्न इति । स यक्षो यस्मिरं दध्यौ स इत्यर्थः । नभसि श्रावणे । नभाः श्रावणिकश्च स इत्यमरः । प्रत्यासन्ने आषाढस्यानन्तरं सन्निकृष्टे प्राप्ते सतीत्यर्थः । दयिताजीवितालम्बनार्थी सन् वर्षाकालस्य विरहदुःखजनकत्वादुत्पन्नानर्थप्रतीकारादनर्थोत्पत्तिप्रतिबन्धएव वरमिति न्यायेन प्रागेव प्रियाप्राणाधारणोपायं चिकीर्षुरित्यर्थः । जीवनस्योदकस्य मूतः पटबन्धो वस्त्रबन्धो जीमूतः । पृषोदरादित्वात् साधुरिति । मूतः स्यात् पटबन्धे पीति रुद्रः । तेन जीमूतेन जलधरेण प्रयोज्येन स्वकुशलमयीं स्वक्षेमप्रधानां प्रवृत्तिं वार्त्ताम् । वार्त्ता प्रवृत्तिर्वृत्तान्तइत्यमरः । हारयिष्यन् प्रापयिष्यन् । लृट् शेषेचेति चकारात् क्रियार्थक्रियोपपदात् लृट्प्रत्ययः । जीवनार्थं कर्म्म जीवनप्रदेनैव कर्त्तव्यमिति भावः । हृक्रोरन्यतरस्यामिति

धूमज्योतिःसलिलमरुतां सन्निपातः क्व मेघः
सन्देशार्थाः क्व पटुकरणैः प्राणिभिः प्रापणीयाः ।
इत्यौत्सुक्यादपरिगणयन् गुह्यकस्तं ययाचे
कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ ५ ॥

कर्म्मसंज्ञायाविकल्पात् पक्षे कर्त्तरि तृतीया । प्रत्ययैर्नवैः कुटजकुसुमैर्गिरिमल्लिकाभिः । कुटजोगिरिमल्लिकेति हलायुधः । कल्पितार्घाय कल्पितोऽनुष्ठितोऽर्घः पूजाविधिर्यस्य तस्मै । मूल्ये पूजाविधावर्घइत्यमरः । तस्मै जीमूताय । क्रियाग्रहणमपि कर्त्तव्यमिति सम्प्रदानत्वाच्चतुर्थी । प्रीतिप्रमुखानि प्रीतिपूर्व्वकाणि वचनानि यस्मिन् कर्म्मणि तत्प्रीतिप्रमुखवचनं यथा तथा शोभनमागतं स्वागतं वचनं प्रीतः सन् व्याजहार कुशलागमनं पप्रच्छेत्यर्थः ॥ ४ ॥

ननु चेतनसाध्यार्थं कथमचेतनेन कारयितुं प्रवृत्तइत्यपेक्षायां कविः समाधत्ते धूमेति । धूमस्य ज्योतिष्च सलिलस्य मरुद्वायुस्य तेषां सन्निपातः सङ्घातो मेघः क्व अचेतनत्वात्सन्देशानर्हइत्यर्थः । पटुकरणैः समर्थेन्द्रियैः । करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपीत्यमरः । प्राणिभिश्चेतनैः । प्राणी तु चेतनो जन्मीत्यमरः । प्रापणीयाः प्रापयितव्याः सन्दिश्यन्तइति सन्देशास्तएवार्थाः क्व इत्येवमौत्सुक्या

जा तं वंशे भुवनविदिते पुष्करावर्त्तकानां
जानामि त्वां प्रकृतिपुरुषं कामरूपं मघोनः।

---

दिष्टार्थेऽद्युक्तत्वात्। दृष्टार्थोद्युक्त उत्सुक इत्यमरः। अ परिगणयन् अविचारयन् गुह्यको यक्षस्तं मेघं य याचे याचितवान् प्रार्थयामास। तथाहि कामार्त्ताः मदनातुराश्चेतनाश्चाचेतनाश्च तेषु विषये प्रकृतिकृपणाः स्वभावदीनाः कामान्धानां युक्तायुक्त विवेकशून्यत्वादचेतनयाचञा न विरुध्यत इत्यर्थः। अत्र मेघसन्देशयोर्विरूपयोर्घटनाद्विषमालङ्कारः। तदुक्तं विरुद्धनार्य्यस्योत्पत्तिर्यत्रानर्थस्य वा भवेत्। विरूपघटनाचासौ विषमालङ्कृतिस्त्रिधा। सा चार्थान्तरन्यासानुप्राणिता तत्समर्थकत्वेनैव चतुर्थ पादे तस्योपन्यासात्॥ ५॥

सम्प्रति याचञाप्रकारमाह जातमिति। हे मेघ! त्वां भुवनेषु विदिते भुवनविदिते। निष्ठेति भूतार्थे क्तः गतिबुद्धोत्यादिना वर्त्तमानार्थत्वेपि क्तस्य च वर्त्तमानइति भुवनशब्दस्य षष्ठ्यन्ततानियमात्समासो न स्यात् क्तेन च पूजायामिति निषेधात्। पुष्करास्चावर्त्तकास्च केचिन्मेघानां श्रेष्ठास्तेषां वंशे जातं महाकुलप्रसूतमित्यर्थः। कामरूपमिच्छाधोनविग्रहं दुर्गादिसञ्चारक्षममित्यर्थः। मघोनः इन्द्रस्य प्रकृतिपुरुषं प्रधानपुरुषं जानामि।

तेनार्थित्वं त्वयि विधिवशात् दूरबन्धुर्गतोऽहं
याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ ६ ॥

तेन महाकुलप्रसूतत्वादिगुणयोगित्वेन हेतुना
विधिवशाद्दैवायत्तत्वात् । विधिर्विधाने दैवेचेत्यमरः ।
वशमायत्ते वशमिच्छाप्रभेदयोरिति विश्वः । दूरे
बन्धुर्यस्य स दूरबन्धुः वियुक्तभार्य्योऽहं त्वय्यर्थित्वं
गतः । ननु याचकस्य याच्ञायां याच्यगुणोत्कर्षः
कुत्रोपयुज्यत इत्याशङ्क्य दैवाद्याच्ञाभङ्गेऽपि
लाघवदोषाभावएवोपयोगइत्याह याच्ञेति । अ
धिगुणेऽधिकगुणे पुंसि विषये याच्ञा मोघा
निष्फलापि वरमीषत्प्रियं दातुर्गुणाढ्यत्वात्प्रियत्वं
याच्ञावैफल्यादीषत्प्रियत्वमिति भावः । अधमे
निर्गुणे याच्ञा लब्धकामापि सफलापि न वरमीष
त्प्रियमपि न भवतीत्यर्थः । देवाद्वृते वरः श्रेष्ठे
त्रिषु क्लीवे मनाक्प्रिये इत्यमरः । अर्थान्तरन्या
सानुप्राणितः प्रेयोऽलङ्कारः । तदुक्तं दण्डिना ।
प्रेयः प्रियतराख्यानमिति । एतदाद्यपादत्रये चतु
र्थपादस्थेनार्थान्तरन्यासेनोपजीवितमिति सुव्यक्त
मेतत् ॥ ६ ॥

सन्तप्तानामिति । हे पयोद ! त्वं सन्तप्ता
नाम् आतपेन वा प्रवासविरहेण वा संज्वरिता
नाम् । सन्तापः संज्वरः समावित्यमरः शरणं

सन्तप्तानां त्वमसि शरणं तत् पयोद प्रियायाः
सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य ।
गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां
बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥ ७ ॥

---

पयोदानेनातपखिन्नानां प्रोषितानां स्वस्थानप्रेरणया च रक्षकोसि । शरणं गृहरक्षित्रोरित्यमरः। तत्तस्मात्कारणाद्धनपतेः कुबेरस्य क्रोधेन विश्लेषितस्य प्रियया वियोजितस्य मे मम सन्देशं वार्त्तां प्रियायाः हर प्रियां प्रति नयेत्यर्थः । सम्बन्धसामान्ये षष्ठी । सन्देशहरणेनावयोः सन्तापं नुदेत्यर्थः । कुत्र स्थाने सा स्थिता तत् स्थानं वा कस्य तत्राह गन्तव्येति । बहिर्भवं बाह्यम् । बहिर्देवपञ्चजनेभ्यश्चेत्यञ् । बाह्ये उद्याने स्थितस्य हरस्य शिरसि या चन्द्रिका तया धौतानि निर्मलानि हर्म्याणि धनिकभवनानि यस्यां सा तथोक्ता । हर्म्यादि धनिनां वास इत्यमरः । अनेन व्यावर्त्तकत्वमुक्तम् । अलका नाम अलकेतिप्रसिद्धा यक्षेश्वराणां वसतिः स्थानं ते तव गन्तव्या त्वया गन्तव्येत्यर्थः । कृत्यानां कर्त्तरि षष्ठी ॥ ७ ॥

मदर्थं प्रस्थितस्य ते पथिकाङ्गनाजनाश्वासनमानुषङ्गिकं फलमित्याह त्वामिति । पवनपदवीमाकाशमारूढं त्वां पन्थानं गच्छन्ति ते पथिकाः ।

त्वामारूढं पवनपदवीमुद्गृहीतालकान्ताः
प्रेक्षिष्यन्ते पथिकवनिताः प्रत्ययादाश्वसत्यः।
कः सन्नद्धे विरहविधुरां त्वय्युपेक्षेत जायां
न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः॥८॥

पथः कन्निति कन्प्रत्ययः। तेषां वनिताः प्रोषितभर्तृकाः प्रत्ययात्प्रियागमनविश्वासात्। प्रत्ययोऽधीनशपथज्ञानविश्वासहेतुष्वित्यमरः। आश्वसत्यो विश्वस्ताः। श्वसिधातोः शत्रन्तादुगितश्चेति ङीप् तथोद्गृहीतालकान्ताः दृष्टिप्रसारार्थमुन्नमय्य धृतालकाग्राः सत्यः प्रेक्षिष्यन्ते अत्युत्कटतया द्रक्ष्यन्तीत्यर्थः। तथाहि त्वयि सन्नद्धे व्यापृते सति विरहेण विधुरां विवशां जायां क उपेक्षेत न कोपीत्यर्थः अन्योपि मद्व्यतिरिक्तोपि यो जनोऽहमिव पराधीनवृत्तिः परायत्तजीवको न स्यात् स्वतन्त्रस्तु न कोप्युपेक्षेतदृत्यर्थान्तरन्यासः॥ ८॥

निमित्तान्यपि ते शुभानि दृश्यन्तइत्याह मन्दं मन्दमिति। अनुकूलः पवनो वायुस्त्वां मन्दं मन्दमतिमन्दमित्यर्थः। अत्र कथञ्चिद्वीप्सायामेव द्विरुक्तिर्निर्वाह्या प्रकारे गुणवचनस्येत्येतदाश्रयणे तु कर्मधारयवद्भावे सुब्लुकि मन्दमन्दमिति स्यात् तदेवाह वामनः मन्दं मन्दमित्यत्राप्रकारार्थे द्विर्भाव इति। यथा सदृशं भाविफलानुरूपमित्यर्थः।

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां
वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः
सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥ ६ ॥

---

यथा साहृश्ययोग्यत्ववीप्सास्वार्थानतिक्रमइति यादवः । नुदति प्रेरयति अयं सगन्धः सगर्वः सम्बन्धीति केचित् । गन्धो गन्धक आमोदे लेशे सम्बन्धगर्वयोरिति विश्वः । ते तव वामो वामभागस्थः । वामस्तु वक्रे रम्ये स्यात्सव्ये वामगतेपि चेति शब्दार्णवः । चातकः पक्षिविशेषश्च मधुरं श्राव्यं नदति व्याहरति इदं निमित्तद्वयं वर्त्तते वर्त्तिष्यते चापरं निमित्तमित्याह । गर्भेति । गर्भः कुक्षिस्थोजन्तुः । गर्भ इत्यारभ्यकुक्षौ कुक्षिस्थजन्तौ चेति यादवः । तस्याधानमुत्पादनं तदेव क्षणउत्सवः सुखहेतुत्वादिति भावः । निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणइत्यमरः । तस्मिन् परिचयादभ्यासाद्धेतोः खे व्योम्नि आबद्धमालाः गर्भाधानसुखार्थं त्वत्समीपे बद्धपङ्क्तय इत्यर्थः । उक्तञ्च कर्णोदये । गर्भं बलाकादधतेऽभ्रयोगान्नाके निबद्धावलयः समन्तादिति । बलाकाः बलाकाङ्गनाः नयनसुभगं दृष्टिप्रियं भवन्तं नूनं सत्यं सेविष्यन्ते ।

तांच्चावश्यं दिवसगणनातत्परामेकपत्नी
मव्यापन्नामविहतगति द्रक्ष्यसि भ्रातृजायाम् ।
आशाबन्धः कुसुमसदृशं प्रायशोह्यङ्गनानां
सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १० ॥

नूनं सत्यं सेविष्यन्ते । अनुकूलमारुतचातकश्रव्दितवलाकादर्शनानां शुभसूचकत्वं शकुनशास्त्रे दृष्टं विस्तरभयान्नालेखि ॥ ९ ॥

नच तस्यानाशात् व्रतस्खलनाद्वा निरर्थकस्त्वत्प्रयास इत्याह

ताञ्चेति । हे मेघ दिवसानामवशिष्टदिनानां गणनायां संख्याने तत्परामासक्ताम् । तत्परे प्रसितासक्ता वित्यमरः । अतएवाव्यापन्नाम् अमृतां शापावसाने मदागमनप्रत्याशया जोविनोमित्यर्थः । एकः पतिर्यस्याः सा एकपत्नी तां पतिव्रतामित्यर्थः । नित्यं सपत्न्यादिष्विति ङीप् नकारश्च । भ्रातुर्मे जायां भ्रातृजायां निःशङ्कं दर्शनीयामित्याशयः । तां मत्प्रियामअविहतगतिः सफलगतिः सन्नवश्यं द्रक्ष्यसि च आलोकयिष्यसे एव । तथाहि आशा अतितृष्णा । आशा दिगतितृष्णयोरिति यादवः । बध्यतेऽनेनेति बन्धोबन्धनं वृन्तमिति यावत् आशैव बन्धः आशाबन्धः कर्त्ता प्रणयि प्रेमयुक्तम् अतएव कुसुमसदृशं सुकुमारमित्यर्थः । अतएव विप्रयोगे विरहे

२

कर्त्तुं यच्च प्रभवति महीमुच्छिलीन्ध्रामवन्ध्यां
तच्छ्रुत्वा ते श्रवणसुभगं गर्ज्जितं मानसोत्काः ।
आ कैलासाद्बिसकिसलयच्छेदपाथेयवन्तः
सम्पत्स्यन्ते नभसि भवतो राजहंसाः सहायाः ॥ ११ ॥

---

सद्यःपाति सद्योभ्रंशनशीलम् अङ्गनानां हृदयं जीवितं हृदयं जीविते चित्ते इति शब्दार्णवः । प्रायशः प्रायेण रुणद्धि प्रतिबध्नातीत्यर्थान्तरन्यासः ॥ १० ॥

सम्प्रति सहायसम्पत्तिश्चास्तीत्याह कर्त्तुमिति । यद्गर्ज्जितं कर्त्तृ महीमुच्छिलीन्ध्रामुद्भूतकन्दलिकाम् । कन्दल्याञ्च शिलीन्ध्रं स्यादिति शब्दार्णवः । अतएव अवन्ध्यां सफलां कर्त्तुं प्रभवति शक्नोति शिलीन्ध्राणां भाविशस्यसम्पत्तिसूचकत्वात् इति भावः । तदुक्तं निमित्तनिदाने । कालाभ्रयोगा दुदिताः शिलीन्ध्राः सम्पन्नशस्यां कथयन्ति धात्री मिति । तत् श्रवणसुभगं श्रोत्रसुखं लोकस्येति शेषः । ते तव गर्ज्जितं श्रुत्वा मानसोत्काः मानसे सरसि उन्मनसः उत्सुका इति यावत् । उत्क उन्मना इति निपातात्साधु । कालान्तरे मानसस्य हिम दुष्टत्वात् हिमस्य च हंसानां रोगहेतुत्वादन्यत्र गता हंसाः पुनर्वर्षासु मानसमेव गच्छन्तीतिप्रसि द्धिः । विसकिसलयानां मृणालाग्राणां छेदैः शकलैः

आपृच्छस्व प्रियसखममुं तुङ्गमालिङ्ग्य शैलं
वन्द्यैः पुंसां रघुपतिपदैरङ्कितं मेखलासु ।
काले काले भवति भवतो यस्य संयोगमेत्य
स्नेहव्यक्तिश्चिरविरहजं मुञ्चतो बाष्पमुष्णम् ॥१२॥

---

पाथेयवन्तः पथि साधु पाथेयं पथि भोज्यम् । पथ्यतिथिवसतिस्वपतेर्ढञ् । तद्वन्तः मृणालकन्दशकलसम्बलवन्त इत्यर्थः । राजहंसा हंसविशेषाः । राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिता इत्यमरः । नभसि व्योम्नि भवतस्तव आ कैलासात् कैलासपर्य्यन्तं पदद्वयञ्चैतत् सहायाः सयालाः । सहायस्तु सयालः स्यादिति शब्दार्णवः । सम्पत्स्यन्ते सम्भविष्यन्ति ॥ ११ ॥

आपृच्छस्वेति । प्रियं सखायं प्रियसखं राजाहःसखिभ्यष्टजिति टच् समासान्तः । तुङ्गमुन्नतं पुंसां वन्द्यैः नराराधनीयैरघुपतिपदैरामपादन्यासैर्मेखलासु कटकेषु । अथ मेखला श्रोणिस्थानेऽद्रिकटके कटिबन्धेभबन्धने इति यादवः । अङ्कितं चिह्नितम् इत्थं सखित्वात् महत्त्वात् पवित्रत्वाच्च सम्भावनार्हममुं शैलं चित्रकूटाद्रिमालिङ्ग्य आपृच्छस्व साधो यामीत्यामन्त्रणेन सभाजय । आमन्त्रणसभाजने आप्रच्छनमित्यमरः । आङि तु पृच्छेरित्यात्मनेपदम् । सखित्वं निर्व्वाहयति काले काले प्रति

मार्गं तावच्छृणु कथयतस्त्वत्प्रयाणानुरूपं
सन्देशं मे तदनु जलद श्रोष्यसि श्रोत्रपेयम्।
खिन्नः खिन्नः शिखरिषु पदं न्यस्य गन्तासि यत्र
क्षीणः क्षीणः परिलघु पयः स्रोतसाञ्चोपयुज्य॥ १३॥

---

प्रावृट्कालं सुहृत्समागमनकालस्य कालशब्देनो च्यते। वीप्सायां द्विरुक्तिः। भवतः संयोगं सम्प र्कमेत्य चिरविरहजम् उष्णं वाष्पमुष्माणं नेत्रजल ञ्च। वाष्पो नेत्रजलोष्मणोरिति विश्वः। मुञ्चतो यस्य शैलस्य स्नेहव्यक्तिः प्रेमाविर्भावो भवति। स्निग्धानां हि विरहसङ्गतानां वाष्पपातो भवतीति भावः॥ १२॥

सम्प्रति तस्य मार्गं कथयति

मार्गमिति। हे जलद तावदिदानीं कथयतोम त्तद्द्रति शेषः। त्वत्प्रयाणस्यानुरूपमनुकूलं मार्गम ध्वानम्। मार्गो मृगपदे मासि सौम्यर्क्षेऽन्वेषणेऽध्वनी ति यादवः। शृणुतदनु मार्गश्रवणानन्तरं श्रोत्राभ्यां पेयं पानार्हम् अतितृष्णया श्रोतव्यमित्यर्थः। पेय ग्रहणात्सन्देशस्यामृतसाम्यं गम्यते। मे सन्देशं वाचिकम्। सन्देशवाग्वाचिकं स्यादित्यमरः। श्रोष्यसि। यत्र मार्गे खिन्नः खिन्नोऽभीक्ष्णं क्षीणबलः सन्। नित्यवीप्सयोरिति नित्यार्थे द्विर्भावः। शिखरिषु पर्व तेषु पदं न्यस्य निक्षिप्य पुनर्बललाभार्थं क्वचिद्विश्र

अद्रेः शृङ्गं हरति पवनः किं स्विदित्युन्मुखीभि
र्दृष्टोत्साहश्चकितचकितं मुग्धसिद्धाङ्गनाभिः।
स्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखः खं
दिङ्नागानां पथि परिहरन् स्थूलहस्तावलेपान्॥१४॥

स्येत्यर्थः क्षीणः क्षीणोऽभीक्ष्णं कृशाङ्गः सन् अत्रापि
कदन्तत्वात्पूर्व्ववत् द्विरुक्तिः। स्रोतसां परिलघु गुरु
त्वदोषरहितमुपलास्फालन खेदितत्वात्पथ्यमित्यर्थः।
तथाच वाग्भटः। उपलास्फालनक्षेपविच्छेदैः खेदि
तोदकाः। हिमवन्मलयोद्भूताः पथ्या नद्यो भवन्त्यमू
रिति। पयः पानीयमुपयुज्य शरीरपोषणार्थमभ्य
वहृत्य च गन्तासि गमिष्यसि गमेर्लुट्॥१३॥

अद्रेरिति। पवनोवायुरद्रेश्चित्रकूटस्य शृङ्गं
हरति किंस्वित्। किंस्विच्छब्दो विकल्पवितर्कार्था
दिषु पठितः। इति शङ्कया उन्मुखीभिरुन्नतमुखी
भिः। स्वाङ्गाच्चोपसर्ज्जनादसंयोगोपधादिति ङीष्।
मुग्धाभिर्मूढाभिः। मुग्धः सुन्दरमूढयोरित्यमरः।
सिद्धानां देवयोनिविशेषाणामङ्गनाभिःचकितचकितं
चकितप्रकारं यथा तथा। प्रकारे गुणवचनस्येति
द्विर्भावः। दृष्टोत्साहः दृष्टसंरम्भः सन् सरसाः
आर्द्राः निचुलाः स्थलवेतसा यस्मिन् तस्मात्। वा
नीरे कविभेदे स्यान्निचुलः स्थलवेतस इति शब्दा
र्णवः। अस्मात् स्थानादाश्रमात् पथि नभोमार्गे दिङ्

रत्नच्छायाव्यतिकर इव प्रेक्ष्यमेतत्पुरस्ता
द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य ।

नागानां दिग्गजानां स्थूलाये हस्ताः करास्तेषामत्र लेपानाक्षेपान् परिहरन्। हस्तो नक्षत्रभेदे स्यात्क रेभकरयोरपीति । अवलेपस्तु गर्व्वे स्याल्लेपने दूष णेपि चेति च विश्वः । उदङ्मुखः सन् अलकाया उदीच्यत्वादित्याशयः। खमाकाशम् उत्पत उद्ग च्छ। अत्रेदमपर्य्यान्तरं ध्वनयति । रसिको नि चुलो नाम महाकविः कालिदासस्य सहाध्यायः परापादितानां कालिदासप्रबन्धदूषणानां परिहर्त्ता यस्मिन् स्थाने तस्मात् स्थानादुदङ्मुखो निर्द्दोषत्वादु न्नतमुखः सन् दिङ्नागाचार्य्यस्य कालिदासप्रति पक्षस्य हस्तावलेपान् हस्तविन्यासपूर्व्वकाणि दूषणा नि परिहरन् अद्रेरद्रिकल्पस्य दिङ्नागाचार्य्यस्य शृङ्गं प्राधान्यम्। शृङ्गं प्राधान्यसान्वोश्चेत्यमरः। हरतीति हेतुना सिद्धैः सारस्वतसिद्धैः महाकवि भिरङ्गनाभिश्च दृष्टो त्साहःसन् खमुत्पत उच्चैर्भव इति स्वप्रबन्धमात्मानं वा प्रति कवेरुक्तिरिति । संसर्गतो दोषगुणा भवन्तीत्येतन्मृषा येन जलाशयेपि। स्थित्वा नुकूलं निचुलश्चलन्तमात्मानमारक्षति सिन्धु वेगादि त्येतत्श्लोकनिर्म्माणात्तस्य कवेर्निचुलसंज्ञेति ॥ १४ ॥

रत्नेति । रत्नच्छायानां पद्मरागादिमणिप्रभा

येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते
वर्हेणेव स्फुरितरुचिना गोपवेशस्य विष्णोः॥ १५ ॥
त्वय्यायत्तं कृषिफलमिति भ्रूविलासानभिज्ञैः
प्रीतिस्निग्धैर्जनपदबधूलोचनैः पीयमानः ।
सद्यः सीरोत्कषणसुरभि क्षेत्रमारुह्य मालं
किञ्चित्पश्चाद्व्रज लघुगतिर्भूय एवोत्तरेण ॥ १६ ॥

---

णां व्यतिकरो मिश्रणमिव प्रेक्ष्यं दर्शनीयमाखण्डलस्येन्द्रस्य धनुःखण्डमेतदिति हस्तेन निर्द्दिशः। पुरस्तादग्रे वल्मीकाग्राद्वामलूरविवराग्रात् । वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकमित्यमरः। प्रभवति आविर्भवति। येन धनुःखण्डेन ते तव श्यामं वपुः स्फुरितरुचिना उज्ज्वलकान्तिना वर्हेण पिच्छेन। पिच्छवर्हे नपुंसके इत्यमरः। गोपवेशस्य विष्णोर्गोपालस्य कृष्णस्य श्यामं वपुरिवातितरां कान्तिं शोभामापत्स्यते प्राप्स्यते॥ १५ ॥

त्वयीति। कृषेर्हलकर्म्मणः फलं शस्यं त्वयि। अधिकरणविवक्षायां सप्तमी। आयत्तमधीनम्। अधीनो निघ्न आयत्त इत्यमरः। इति हेतोः प्रीत्या स्निग्धैरकृत्रिमप्रेमार्द्रैरित्यर्थः। भ्रूविलासानां भ्रूविकाराणामनभिज्ञैः पामरत्वादिति शेषः। जनपदबधूनां पल्लीयोषितां लोचनैः पीयमानः सादरं वीक्ष्यमाणः सन् मालं मालाख्यं क्षेत्रं शैलप्रा

त्वामासारप्रशमितवनोपप्लवं साधु मूर्ध्ना
वक्ष्यत्यध्वश्रमपरिगतं सानुमानाम्रकूटः ।
न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १७ ॥

---

यमुन्नतस्थलम् । मालमुन्नतभूतलमित्युत्पलः । सद्य स्तत्कालमेव सीरैर्हलैः उत्कर्षणेन सुरभि घ्राण तर्पणं यथा तथा आरुह्य तत्राभिवृष्येत्यर्थः । सुरभि घ्राणतर्पण इत्यमरः । किञ्चित्पश्चाद्व्रज गच्छ । ल घुगतिस्तव निर्वृष्टत्वात् क्षिप्रगमनः सन् । लघु क्षि प्रमरं द्रुतमित्यमरः । भूयः पुनरपि उत्तरेणैव उ त्तरमार्गेणैव व्रज । तृतीयाभिधाने प्रकृत्यादिभ्यः उपसंख्यानमिति तृतीया । यथा कश्चिदङ्गवल्लभः पतिः क्वचित् क्षेत्रे कलत्रे गूढं विहृत्य । क्षेत्रं श रीरे केदारे सिद्धस्थानकलत्रयोरिति विश्वः । दा क्षिण्यभङ्गभयान्नीचमार्गेण निर्गत्य पुनः सर्व्वाध्यक्षं सञ्चरति तद्वदिति ध्वनिः ॥ १६ ॥

त्वामिति । आम्राश्चूताः कूटेषु शिखरेषु यस्य स आम्रकूटो नाम सानुमान पर्व्वतः । आम्रश्चूतो रसालोऽसौ इति । कूटोऽस्त्री शिखरं शृङ्गमिति चामरः । आसारो धारावृष्टिः । धारासम्पात आ सार इत्यमरः । तेन प्रशमितो वनोप्लवो दावा ग्निर्येन तं कृतोपकारमित्यर्थः । अध्वश्रमेण परि

छन्नोपान्तः परिणतफलद्योतिभिः काननाम्रै
स्त्वय्यारूढे शिखरमचलः स्निग्धवेणीसवर्णे ।
नूनं यास्यत्यमरमिथुनप्रेक्षणीयामवस्थां
मध्ये श्यामः स्तन इव भुवः शेषविस्तारपाण्डुः ॥१८॥

---

गतं व्याहृत्वां साधु सम्यक् मूर्ध्ना वक्ष्यति वोढ़ा । वहेर्ल्टट् । तथाहि क्षुद्रः कृपणोऽपि । क्षुद्रो दरिद्रे कृपणे नृशंस इति यादवः । संश्रयाय संश्रयणाय मित्रे सुहृदि प्राप्ते आगते सति प्रथमसुकृतापेक्षया पूर्व्वोपकारपर्य्यालोचनया विमुखो न भवति यस्तथा तेन प्रकारेणोच्चैरुन्नतः स आम्रकूटः किं पुनः विमुखो न भवतीति किमु वक्तव्यमित्यर्थः । एतेन प्रथमावसथे सौख्यलाभात्ते कार्य्यसिद्धिरस्तीति सूचितम् । तदुक्तं निमित्तनिदाने । प्रथमावसथे यस्य सौख्यं तस्याखिलेऽध्वनि । शिवं भवति यात्रायामन्यथा त्वशुभं ध्रुवमिति ॥ १७ ॥

छन्नेति । हे मेघ परिणतैः परिपक्कैः फलैर्द्योतन्त इति तथोक्तैः । आषाढ़े वनचूताः फलन्ति पच्यन्ते च मेघवातेनेत्याशयः । काननाम्रैर्वनचूतैश्छन्नोपान्तः आवृतपार्श्वोऽचल आम्रकूटाद्रिः स्निग्धवेणीसवर्णे मसृणकेशबन्धच्छाये श्यामवर्णे इत्यर्थः । वेणी तु केशबन्धे जलस्रुतौ इति यादवः । त्वयि शिखरं शृङ्गमारूढ़े सति । यस्य च भावेन

अध्वक्लान्तं प्रतिमुखगतं सानुमानाम्रकूट-
स्तुङ्गेन त्वां जलद शिरसा वक्ष्यति श्लाघमानः ।
आसारेण त्वमपि शमयेस्तस्य नैदाघमग्निं
सद्भावार्द्रः फलति नचिरेणोपकारो महत्सु ॥ ० ॥
स्थित्वा तस्मिन् वनचरबधूभुक्तकुञ्जे मुहूर्त्तं
तोयोत्सर्गद्रुततरगति स्तत्परं वर्त्म तीर्णः ।
रेवां द्रक्ष्यस्युपलविषमे विन्ध्यपादे विशीर्णां
भक्तिच्छेदैरिव विरचितां भूतिमङ्गे गजस्य ॥ १९ ॥

---

भावलक्षणमिति सप्तमी । मध्ये श्यामः शेषे मध्या-
दन्यत्र विस्तारे परितः पाण्डुः हरिणः । हरिणः
पाण्डुरः पाण्डुरित्यमरः । भुवः स्तन इव अमरमि-
थुनानां खेचराणामिति भावः । प्रेक्षणीयां दर्श-
नीयामवस्थां नूनं यास्यति । यथा पथि क्लान्तः
कश्चित्कामी कामिनीनां कुचकलशे विश्रान्तः सन्
स्वपिति तद्वद्भवानपि भुवो नायिकायाः स्तने इति
ध्वनिः ॥ १८ ॥

स्थित्वेति । हे मेघ वने चरन्तीति वनचराः ।
तत्पुरुषे कृतिबहुलमिति बहुलग्रहणाल्लुग्भवति ।
तेषां बधूभिर्भुक्ताः कुञ्जा लतागृहा यत्र तस्मिन् ।
निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे इत्य-
मरः । तत्र ते नयनविनोदोऽस्तीत्यर्थः । तस्मिन्ना-
म्रकूटे मुहूर्त्तमल्पकालं न तु चिरं स्वकार्य्यविरो-

तस्यास्तिक्तैर्वनगजमदैर्वासितं वान्तवृष्टि-
र्जम्बूकुञ्जप्रतिहतरयं तोयमादाय गच्छेः ।
अन्तःसारं घन तुलयितुं नानिलः शक्ष्यति त्वां
रिक्तः सर्व्वो भवति हि लघुः पूर्णता गौरवाय॥ २०॥

---

धादिति भावः। मुहूर्त्तमल्पकाले स्यादृटिकाद्वित येपि चेति शब्दार्णवः। स्थित्वा विश्रम्य तोयोत्स र्गेण त्वामासारेण क्वतवर्षणेन द्रुततरगतिर्लाघवाद्वे तोरतिच्छिप्रगमनः सन् तस्मादाम्रकूटात्परम् अन न्तरं तत्परं वर्त्म मार्गं तीर्णोऽतिक्रान्तः उपलैः पाषाणैः विषमे विन्ध्यस्याद्रेः पादे प्रत्यन्तपर्व्वते। पादाः प्रत्यन्तपर्व्वता इत्यमरः। विशीर्णां समन्ततो विसृमराम्। एतेन कस्याश्चित्कामुक्याः प्रियतम चरणपातोपि ध्वन्यते। रेवां नर्म्मदाम्। रेवा तु नर्म्मदा सोमोद्भवा मेखलकन्यकेत्यमरः। गजस्याङ्गे शरीरे भक्तयोरचनाः रेखा इति यावत्। भक्ति र्निषेवणे भागे रचनायामिति शब्दार्णवः। तासां छेदैर्भङ्गिभिर्विरचितां भूतिं शृङ्गारमिव। भूति र्मातङ्गशृङ्गारे जातौ भस्मनि सम्पदीति विश्वः। द्रक्ष्यसि अयमपि महांस्ते नयनकौतुकलाभ इति भावः॥ १९॥

तस्या इति। हे मेघ वान्तवृष्टिरुद्गीर्णवर्षः सन् कृतवमनश्च व्यज्यते तिक्तैः सुगन्धिभिस्तिक्तर

नीपं दृष्ट्वा हरितकपिशं केशरैरर्द्धरूढै-
राविर्भूतप्रथममुकुलाः कन्दलीश्चानुकच्छम्।
जग्ध्वारण्येष्वधिकसुरभिं गन्धमाघ्राय चोर्व्याः
सारङ्गास्ते जललवमुचः सूचयिष्यन्ति मार्गम्॥ २१॥

---

सर्वाङ्गिस्त्र। तिक्तोरसे सुगन्धौ चेति विश्वः। वनगजमदैर्वासितं सुरभितं भावितञ्च। हिमव द्विन्ध्यमलया गजानां प्रभवा इति विन्ध्यस्य गजप्रभ वत्वादिति भावः। जम्बूकुञ्जैः प्रतिहतरयं प्रति बद्धवेगं सुखपेयमित्यर्थः। अनेन लघुत्वं कषाय भावना च व्यज्यते। तस्या रेवायाःतोयमादाय गच्छेः व्रज। हे घन मेघ अन्तःसारो बलं यस्य तं त्वामनिलः आकाशवायुः शरीरस्थश्च गम्यते तुलयितुं न श च्यति शक्तो न भविष्यति। तथाहि रिक्तोऽन्तः सारशून्यः सर्वोऽपि लघुरभुक्तः प्रकम्प्यो भवतीत्य र्थः। पूर्णता सारवत्ता गौरवायाप्रकम्प्यत्वाय भवतीत्यर्थः। अयमत्र ध्वनिः आदौ वमनशोधित स्य पुंसः पश्चात् श्लेष्मशोषणाय लघुतिक्तकषायाम्बु पानात्प्रबलस्य वातप्रकम्पो न स्यादिति॥ २०॥

नीपमिति। सारङ्गा मतङ्गजाः कुरङ्गा वा। सारङ्गश्चातके भृङ्गे कुरङ्गे च मतङ्गजे इति विश्वः। अर्द्धरूढैरेकदेशोद्गतैः केशरैः किञ्जल्कैर्हरितं पा लाशवर्णं कपिशं कृष्णपीतञ्च। पलाशो हरितो

अम्भोविन्दुग्रहणचतुरांश्चातकान् वीक्षमाणाः
श्रेणीभूताः परिगणनया निर्द्दिशन्तो बलाकाः ।
त्वामासाद्य स्तनितसमये मानयिष्यन्ति सिद्धाः
सोत्कम्पानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥ २२ ॥

---

हरिदिति श्यावः स्यात्कपिश इति चामरः । वर्णोवर्णेनेति समासः नीपं स्थलकदम्बकुसुमम् । अथ स्थलकदम्बके नीपः स्यादिति शब्दार्णवः । दृष्ट्वा संप्रेक्ष्य विदित्वेति यावत् । तथा कच्छेष्वनूपेषु अनुकच्छम् । विभक्त्यर्थेऽव्ययीभावः । जलप्रायमनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः । आविर्भूताः प्रथमाः प्रथमोत्पन्ना मुकुलायासां ताः कन्दलीर्भूमिकदलीः । द्रोणपर्णी स्निग्धकन्दा कन्दलीभूकदल्यपीति शब्दार्णवः जग्ध्वा भक्षयित्वा । अदोजग्धिरिति जग्ध्यादेशः । अरण्येष्वधिकसुरभिमतिघ्राणतर्पणम् । दग्धारण्येष्विति पाठे दग्धमित्यधिकविशेषणम् अर्थवशात्कन्दलीश्च दृष्ट्वेत्यन्वयो द्रष्टव्यः । उर्व्वीभूमेर्गन्धमाघ्राय जललवमुचो मेघस्य ते तव मार्गं सूचयिष्यन्ति अनुमापयिष्यन्ति । यत्र यत्र कन्दलीमुकुलनीपकुसुमादिकं दृश्यते तत्र तत्र त्वया दृष्टमित्यनुमीयतइति भावः ॥ २१ ॥

अम्भ इति । प्रक्षिप्तमपि व्याख्यायते । अम्भोविन्दूनां वर्षोदविन्दूनां ग्रहणे सर्व्वं सहापतितमम्बु

उत्पश्यामि द्रुतमपि सखे मत्प्रियार्थं यियासोः
कालक्षेपं ककुभसुरभौ पर्व्वते पर्व्वते ते।
शुक्लापाङ्गैः सजलनयनैः स्वागतीकृत्य केकाः
प्रत्युद्यातः कथमपि भवान् गन्तुमाशु व्यवस्येत्॥ २२॥

---

न चातकस्य हितमितिशास्त्रात् भूस्पृष्टोदकस्य तेषां रोगहेतुत्वादन्तराले एव स्वीकारे चतुरांस्तात कान् वीक्षमाणाः कौतुकात् पश्यन्तः श्रेणीभूताः बद्धपङ्क्तीः। अभूततद्भावे च्विः। बलाकाः बक पङ्क्तीः परिगणनया एका द्वे तिस्र इति संख्या नेन निर्द्दिशन्तो हस्तेन दर्शयन्तः सिद्धाः स्तनि तसमये त्वद्गर्ज्जितकाले सोत्कम्पानि उत्कम्पपू र्व्वकाणि प्रियसहचरीणां सम्भ्रमेणालिङ्गितानि आसाद्य स्वयं ग्रहणाश्लेषसुखमनुभूयेत्यर्थः। त्वां मानयिष्यन्ति त्वन्निमित्तत्वात् सुखलाभस्येति भावः॥ २२॥

उत्पश्यामीति। हे सखे मेघ मत्प्रियार्थं यथा तथा द्रुतं क्षिप्रम्। लघु क्षिप्रमरं द्रुतमित्य मरः। यियासोः यातुमिच्छोरपि। यातेः सन्न न्तादुप्रत्ययः। ते तव ककुभैः कुटजकुसुमैः सुरभौ सुगन्धिनि। ककुभः कुटजोऽर्ज्जुन इति शाब्दार्ण वः। पर्व्वते पर्व्वते प्रतिपर्व्वतम्। वीप्सायां द्विरु क्तिः। कालक्षेपं कालविलम्बम्। क्षेपो विलम्बे

पाण्डुच्छायोपवनवृतयः केतकैः सूचिभिन्नै
र्नीड़ारम्भैर्गृहबलिभुजामाकुलग्रामचैत्याः ।
त्वय्यासन्ने परिणतफलश्यामजम्बूवनान्ताः
सम्पत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णाः ॥ २४ ॥

---

निन्दायामिति विश्वः । उत्पश्यामि उत्प्रेक्षे । विलम्बहेतुं दर्शयन्नाशुगमनं प्रार्थयते शुक्लेति । सजलानि सानन्दवाष्पाणि नयनानि येषां तैः शुक्लापाङ्गैर्म्मयूरैः । मयूरोवर्हिणोवर्ही शुक्लापाङ्गः शिखावल इति यादवः । केकाः स्ववाणीः । केका वाणी मयूरस्येत्यमरः । स्वागतीकृत्य स्वागतवचनीकृत्य प्रत्युद्यातः प्रत्युद्गतः कृतातिथ्य इत्यर्थः । भवान् कथमपि यथाकथञ्चित आशु गन्तुं व्यवस्येत् उद्युञ्जीत । प्रार्थने लिङ् । शेषे प्रथम इति प्रथम पुरुषः । शेषस्त्वायं भवच्छब्दोयुष्मदस्मच्छ व्द्यतिरेकात् । स्वागतीकृत्य केका इत्यत्र केकास्वारोप्यमाणस्य स्वागतवचनस्य प्रकृतप्रत्युद्गमनोपयोगात् परिणामालङ्कारः । तदुक्तमलङ्कारसर्व्वस्वे । आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणाम इति ॥ २३ ॥

पाण्डुच्छायेति । हे मेघ त्वय्यासन्ने सन्निकृष्टे सति दशार्णा नाम जनपदाः सूचिभिन्नैः सूचिषु मुकुलाग्रेषु भिन्नैर्व्विकसितैः । मुकुलाग्रेषु सूचिः स्यादिति

तेषां दिक्षु प्रथितविदिशालक्षणां राजधानीं
गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्ध्वा।
तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मात्
सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्म्मि॥ २५॥

---

शब्दार्णवः। केतकैः केतकीकुसुमैः पाण्डुच्छायाः हरिणवर्णाः उपवनानां वृतयः कण्टकशाखावरणा येषु ते तथोक्ताः। प्राकारो वरणः सालःप्राचीरं प्रान्ततोवृतिरित्यमरः। तथा गृहबलिभुजां काकादिग्रामपक्षिणां नीडारम्भैः कुलायनिर्म्माणैः। कुलायो नीडमस्त्रियामित्यमरः। आकुलानि सङ्कीर्णानि ग्रामेषु चैत्यानि रथ्यावृक्षाः येषु ते तथोक्ताः। चैत्यमायतने बुद्धवन्द्ये चोद्देशपादपे इति विश्वः। तथा परिणतैः पक्वैः फलैः श्यामानि यानि जम्बूवनानि तैरन्ताः रम्याः। स्तृतावत्रसिते रम्ये समाप्तावन्त इष्यते इति शब्दार्णवे। तथा कतिपयेष्वेव दिनेषु स्थायिनो हंसा येषु ते तथोक्ताः एवंविधाः सम्पत्स्यन्ते भविष्यन्ति॥ २४॥

तेषामिति। दिक्षु प्रथितं प्रसिद्धं विदिशेति लक्षणं नामधेयं यस्यास्ताम्। लक्षणं नाम्नि चिह्ने चेति विश्वः। तेषां दशार्णानां सम्बन्धिनीं राजानो धीयन्ते यस्यामिति राजधानी। कालाधिकरणयोश्चेति ल्युट् कृद्योगलक्षणा षष्ठी समस्यत

नीचैराख्यं गिरिमधिवसेस्तत्र विश्रामहेतो
स्त्वत्सम्पर्कात् पुलकितमिव प्रौढ़पुष्पैः कदम्बैः।
यः पण्यस्त्रीरतिपरिमलोद्गारिभिर्नागराणा
मुद्दामानि प्रथयति शिलावेश्मभिर्यौवनानि॥ २६॥

इति वक्तव्यात् समासः। तां राजधानीं प्रधाननग रीम्। प्रधाननगरी राज्ञां राजधानीति कथ्यत इति शब्दार्णवे। गत्वा प्राप्य सद्यः कालकालस्य विलासितायाः। विलासी कामुकः कामी स्त्रीपरो रतिलम्पट इति शब्दार्णवे। अविकलं समग्रं फलं प्रयोजनं लब्धा लप्स्यते त्वयेति शेषः कर्म्मणि लुट्। कुतः यस्मात् कारणात् स्वादु मधुरम्। चला ऊर्म्म यो यस्य तच्चलोर्म्मि तरङ्गितं वेत्रवत्या नाम नद्याः पयः सभ्रूभङ्गं भ्रूकुटियुक्तं दशनपीडयेति भावः। मुखमिवाधरमिवेत्यर्थः। तीरोपान्ते तटप्रान्ते यत् स्तनितं गर्ज्जितं तेन सुभगं यथा तथा स्तनितश ब्देन मणितमपि व्यपदिश्यते। ऊर्द्ध्वमुच्चलितकण्ठ नासिकं हुङ्कृतं स्तनितमल्पघोषवदिति लक्षणात्। पास्यसि पिबतेर्लृट्। कामिनामधरास्वादः सु रतादतिरिच्यत इति भावः॥ २५॥

नीचैरिति। हे मेघ तत्र विदिशासमीपे वि श्रामः खेदापनयः। भावे घञ्प्रत्ययः। तस्य हेतोः विश्रामार्थमित्यर्थः। षष्ठी हेतुप्रयोगे इति षष्ठी।

विश्रान्तः सन् व्रज वननदीतीरजातानि सिञ्च न्नुद्यानानां वनजलकणैर्यूथिकाजालकानि ।

---

प्रौढ़पुष्पैः प्रचुरकुसुमैः कदम्बैर्नीपवृक्षैः त्वत्सम्प र्कात् तव सङ्गात् पुलका अस्य जाताः पुलकित मिव सञ्जातपुलकमिव स्थितम् । तारकादित्वादि तच्प्रत्ययः । नीचैरित्याख्या यस्य तं नीचैराख्यं गि रिमधिवसेः गिरौ वसेत्यर्थः । उपान्वध्याङ् वस इति कर्म्मत्वम् । यो नीचैर्गिरिः पण्याः क्रेयाः स्त्रियः पण्यस्त्रियो वेश्याः । वारस्त्री गणिका वेश्या पण्य स्त्री उपजीविनीति शब्दार्णवे । तासां रतिषु यः परिमलो गन्धविशेषः । विमर्द्दोत्थे परिमलो गन्धे जनमनोहरे इत्यमरः । तमुद्गिरन्त्याविस्कुर्व्वन्तीति तथोक्तानि तैः शिलावेश्मभिः कन्दरैः नागराणां पौ राणामुद्दामान्युत्कटानि यौवनानि प्रथयति प्रकट यति । उत्कटयौवनाः क्वचिदनुरक्ताः वाराङ्गना विश्रम्भविहाराकाङ्क्षिण्यो मातादिभयान्निशी थसमये कञ्चन विविक्तं देशमाश्रित्य रमयन्तीति प्रसिद्धिः ॥ २६ ॥

विश्रान्तइति । विश्रान्तः सन् तत्र नीचैर्गिरौ विनीताध्वश्रमः सन् वने अरण्ये या नद्यस्तासां तीरेषु जातानि स्वयं रूढ़ानि अकृत्रिमाणीत्यर्थः । नदनदीति पाठे पुमान् स्त्रियेत्येकशेषो दुर्व्वारः ।

गण्डस्वेदापनयनरुजाक्लान्तकर्णोत्पलानां
छायादानात् क्षणपरिचितः पुष्पलावीमुखानाम्॥ २७ ॥

---

उद्यानानामारामाणां सम्बन्धीनि यूथिकाजालकानि मागधीकुसुममुकुलानि । अथ मागधी गणिका यूथिकेत्यमरः । कोरकजालककलिकाकुट्मलमुकुलानि तुल्यानीति हलायुधः । नवजलकणैः सिञ्चन्नार्द्रीकुर्व्वन् । अत्र सिञ्चतेरार्द्रीकरणार्थत्वे द्रवद्रव्यस्य करणत्वम् अन्यार्थत्वे तु कर्म्मत्वम् । यथा रेतः सिक्ता कुमारीषु सुखैर्निषिञ्चन्तमिवामृतं त्वचीत्येवमादि । एवं किरतीत्यादीनामपि रजः किरति मारुतः अवाकिरन् वयोवृद्धास्तं लाजैः पौरयोषित इत्यादिष्वर्थभेदाश्रयणेन रजोलाजानां कर्म्मत्वकरणत्वे गमयितव्ये । तथा गण्डयोः कपोलयोः स्वेदस्यापनयनेन प्रमार्ज्जनेन या रुजा पीडा भिदादित्वादङ्प्रत्ययः । तया क्लान्तानि म्लानानि कर्णोत्पलानि येषां तेषां तथोक्तानाम् । पुष्पाणि लुनन्तीति पुष्पलाव्यः पुष्पवचायिकाः स्त्रियः । कर्म्मण्यण् टिड्ढाणञित्यादिना ङीप् । तासां मुखानि । छायाया अनातपस्य दानात् कान्तिदानञ्च ध्वन्यते । छायासूर्य्यप्रियाकान्तिः प्रतिबिम्बमनातप इत्यमरः । कामुकदर्शनात्कामिनीनां मुखविकाशो भवतीति

वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तराशां
सौधोत्सङ्गप्रणयविमुखोमास्मभूरुज्जयिन्याः।
विद्युद्दामस्फुरितचकितैस्तत्र पौराङ्गनानां
लोलापाङ्गैर्यदि न रमसे लोचनैर्वञ्चितोऽसि॥ २८॥

---

भावः। क्षणपरिचितः क्षणं संसृष्टः सन् नतु चिरं व्रज गच्छ॥ २७॥

वक्रइति। उत्तराशामुदीचीं दिशं प्रति प्रस्थितस्य भवतः पन्थाः उज्जयिनीमार्गः वक्रोयदपि दूरो यद्यपीत्यर्थः। विन्ध्यादुत्तरवाहित्यानिर्विन्ध्यायाः प्राग्भागे कियत्यपि दूरे स्थिता उज्जयिनी उत्तरपथस्तु निर्विन्ध्यायाः पश्चिमइति वक्रत्वम्। तथाप्युज्जयिन्याः विशालानगरस्य। विशालोज्जयिनी समेत्युत्पलः। सौधानामुत्सङ्गेषु परिभागेषु प्रणयः परिचयः। प्रणयः स्यात्परिचये याच्ञायां सौहृदेपि चेति यादवः। तस्य विमुखः पराङ्मुखोमास्मभूः न भवेत्यर्थः। स्मोत्तरे लङ् चेति चकाराद्दाशीरर्थे लुङ्। न माङ्योगइत्यडागमप्रतिषेधः। तत्रोज्जयिन्यां विद्युद्दाम्नां विद्युल्लतानां स्फुरितेभ्यः स्फुरणेभ्यश्चकितैभीतैर्लीलापाङ्गैश्चञ्चलकटाक्षैः पौराङ्गनानां लोचनैर्न रमसे यदि। तर्हि त्वं वञ्चितः प्रतारितोऽसि जन्मवैफल्यं भवेदित्यर्थः॥ २८॥

वीचिक्षोभस्तनितविहगश्रेणिकाञ्चीगुणायाः
संसर्पन्त्याः स्खलितसुभगं दर्शितावर्त्तनाभेः ।
निर्विन्ध्यायाः पथि भव रसाभ्यन्तरः सन्निपत्य
स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ २८ ॥

---

सम्प्रत्युज्जयिनीं गच्छतस्तस्य मध्येमार्गं निर्विन्ध्यासम्बन्धमाह

वीचीति । हे सखे पथि उज्जयिनीपथे वीचिक्षोभेण तरङ्गचलनेन स्तनितानां मुखराणाम् । कर्त्तरि क्तः । विहगानां हंसानां श्रेणिः पङ्क्तिरेव काञ्चीगुणो यस्यास्तस्याः स्खलितेनोपलस्खलनेन मदस्खलितेन च सुभगं यथा तथा संसर्पन्त्याः प्रवहन्त्या गच्छन्त्याश्च तथा दर्शिता प्रकटिता आवर्त्तोऽम्भसां भ्रम एव नाभिर्यया । स्यादावर्त्तोऽम्भसां भ्रमइत्यमरः । निष्क्रान्ता विन्ध्यान्निर्विन्ध्या नाम नदी । निरादयः क्रान्ताद्यर्थे पञ्चम्येति समासः । द्विगुप्राप्तापन्नेत्यादिना परवल्लिङ्गताप्रतिषेधः । तस्याः नद्याः सन्निपत्य सङ्गत्य रसो जलमभ्यन्तरे यस्य सः अन्यत्र रसेन शृङ्गारेणाभ्यन्तरः अन्तरङ्गो भव सर्व्वथा तस्यारसमनु भवेत्यर्थः । शृङ्गारादौ जले वीर्ये सुवर्णे विषशुक्रयोः । आस्वादे च रसं प्राहुरिति शब्दार्णवः । ननु तत्पार्थनामन्तरेण कथं तवानुभवो युज्यते इत्यतआह स्त्रीणामिति । स्त्रीणां प्रियेषु विभ्र

वेणीभूतप्रतनुसलिलासावतीतस्य सिन्धुः
पाण्डुच्छाया तटरुहतरुभ्रंशिभिर्जीर्णपर्णैः ।
सौभाग्यं ते सुभग विरहावस्थया व्यञ्जयन्ती
कार्श्यं येन त्यजति विधिना स त्वयैवोपपाद्यः ॥ ३० ॥

---

मो विलास एवाद्यं प्रणयवचनं प्रार्थनावाक्यं हि । स्त्री णामेष स्वभावो यद्विलासैरेव रागप्रकाशनं ननु कण्ठतइति । विभ्रमस्त्वत्र नाक्षिसन्दर्शनादिरुक्तएव ॥ २९ ॥

निर्विन्ध्याया विरहावस्थां वर्णयन् तन्निराकरणं प्रार्थयते

वेणीति । अवेणी वेणीभूतं वेण्याकारं प्रतनु स्तोकञ्च सलिलं यस्याः सा तथोक्ता वेणीभूतकेशपाशा इति च ध्वन्यते । रुहन्तीति रुहाः । इगुपधलक्षणः कः । तटयो रुहा ये तरवस्तेभ्यो भ्रश्यन्तीति तथोक्तैः जीर्णपर्णैः शुष्कपत्रैः पाण्डुच्छाया पाण्डुवर्णा अतएव हे सुभग विरहावस्थया पूर्वोक्तप्रकारया कारणेन अतीतस्य एतावन्तं कालमतीत्य गतस्य प्रोषितस्येत्यर्थः । ते तव सौभाग्यं सुभगत्वम् । हृद्गगसिन्ध्वन्ते पूर्वपदस्य चेत्युभयपदवृद्धिः । व्यञ्जयन्ती प्रकाशयन्ती । स खलु सुभगोयमङ्गनाः कामयन्ते इति भावः । असौ पूर्वोक्ता सिन्धुर्नदी निर्विन्ध्या । स्त्री नद्यां नारदे सिन्धुर्देश

प्राप्यावन्तीनुदयनकथाकोविदग्रामवृद्धान्
पूर्व्वोद्दिष्टामनुसर पुरीं श्रीविशालां विशालाम् ।

भेदेऽम्बुधौ गजइति वैजयन्ती । येन विधिना व्यापारेण कार्श्यन्त्यजति सविधिस्त्वयैवोपपाद्यः कर्त्तव्य इत्यर्थः । स च विधिरेकत्र दृष्टिरन्यत्र सम्भोगः तदभावनिबन्धनत्वात्कार्श्यस्येति भावः । इयं पञ्चमी मदनावस्था । यदुक्तं रतिरहस्ये । नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः । निद्राच्छेदस्तनुता विषयनिर्वृत्तिस्त्रपानाशः । उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युरिति । तामतीत्येति पाठमाश्रित्य सिन्धुर्नाम नद्यन्तरमिति व्याख्यातं किन्तु सिन्धुर्नाम कश्चिन्नदः काश्मीरदेशे स्थितः नदीतु कुत्रापि नास्तीति एतदुपेक्ष्यम् ॥ ३० ॥

प्राप्येति । विदन्तीति विदाः । इगुपधलक्षणः कः । ओकसो वेद्मस्थानस्य विदाः कोविदाः ओकारलुप्ते पृषोदरादित्वात्साधुः । उदयनस्य वत्सराजस्य कथानां वासवदत्ताहरणाद्यद्भुतोपाख्यानानां कोविदास्तत्त्वज्ञाः ग्रामेषु ये वृद्धास्ते सन्ति येषु तान् अवन्तीन् तन्नामजनपदान् प्राप्य तत्र पूर्व्वोद्दिष्टां पूर्व्वोक्तां सौधोत्सङ्गप्रणयविमुखोमास्म भूरुज्जयिन्या इत्युक्तां श्रीविशालां सम्पत्तिमहतीम् । शोभासम्पत्तिपद्मासु लक्ष्मीः श्रीरिव दृश्य

स्वल्पीभूते सुचरितफले स्वर्गिणां गां गतानां
शेषैः पुण्यैर्हृतमिव दिवः कान्तिमत्खण्डमेकम्॥ ३१॥
हारांस्तारांस्तरलगुटिकान् कोटिशः शङ्खशुक्तीः
शष्पश्यामान्मरकतमणीनुन्मयूखप्ररोहान्।
दृष्ट्वा यस्यां विपणिरचितान् विद्रुमाणाञ्च भङ्गान्
संलक्ष्यन्ते सलिलनिधयस्तोयमात्रावशेषाः॥ ०॥
प्रद्योतस्य प्रियदुहितरं वत्सराजोऽत्र जह्रे
हैमं तालद्रुमवनमभूदत्र तस्यैव राज्ञः।
अत्रोद्भ्रान्तः किल नलगिरिः स्तम्भमुत्पाट्य दर्पा
दित्यागन्तून् रमयति जनो यत्र बन्धूनभिज्ञः॥ ०॥
पत्रश्यामा दिनकरहयस्पर्द्धिनो यत्र वाहाः
शैलोदग्रास्त्वमिव करिणो वृष्टिमन्तः प्रभेदात्।

---

तद्वदिति शाश्वतः। विशालां पुरीमुज्जयिनीमनुसर व्रज। कथमिव स्थितां सुचरितफले पुण्यफले स्वर्गोपभोगलक्षणे स्वल्पीभूतेऽत्यल्पावशिष्टे सतीत्यर्थः। गां भूमिं गतानां पुनरपि भूलोकगतानामित्यर्थः। स्वर्गिणां स्वर्गवतां जनानां शेषैर्भुक्तशिष्टैः पुण्यैः सुकृतैः हृतमानीतं कान्तिरस्यास्तीति कान्तिमदुज्ज्वलं सारभूतमित्यर्थः। एकं मुक्तादन्यत्। एके मुख्यान्यकेवला इत्यमरः। दिवः स्वर्गस्य खण्डमिव स्थितामित्युत्प्रेक्षा। एतेनातिक्रान्तसकलभूलोकनगरसौभाग्यसारत्वमुज्जयिन्याव्यज्यते॥ ३१॥

योधाग्रण्यः प्रतिदशमुखं संयुगे तस्थिवांसः
प्रत्यादिष्टाभरणरुचयश्चन्द्रहासव्रणाङ्कैः ॥ ० ॥
दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां
प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।

---

दीर्घीकुर्व्वन्निति। यत्र विशालायां प्रत्यूषेषु अहर्म्मुखेषु। प्रत्यूषोऽहर्म्मुखं कल्यमित्यमरः। पटु प्रस्फुटं मदकलं मदेनाव्यक्तमधुरम्। ध्वनौ तु मधुरास्फुटे कल इत्यमरः। सारसानां पक्षिविशेषाणाम्। सारसो मैथुनी कामी गोनर्द्दः पुष्कराह्वय इति यादवः। यद्वा सारसानां हंसानाम्। चक्राङ्गः सारसो हंस इति शब्दार्णवे। कूजितं रुतं दीर्घीकुर्व्वन् विस्तारयन्नित्यर्थः। यावद्वातं शब्दानुवृत्तेरिति भावः। एतेन प्रियतमः स्वचाटुवाक्यानुसारि क्रीड़ाकूजितमविच्छिन्नीकुर्वन्निति च गम्यते। स्फुटितानां विकसितानां कमलानामामोदेन परिमलेन सह या मैत्री संसर्गस्तेन कषायः सुरभिः। रागद्रव्ये कषायोऽस्त्री निर्य्यासे सौरभे रसइति यादवः। अन्यत्र विमर्द्दगन्धीत्यर्थः। विमर्द्दोत्थे परिमलोगन्धे जनमनोहरे। आमोदः सोऽतिनिर्हारीत्यमरः। अङ्गानुकूलोगात्रसुखस्पर्शः। अन्यत्र गाढ़ालिङ्गनदत्तगात्रसंवाहन इत्यर्थः। भवम

यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः
शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः ॥३२॥
जालोद्गीर्णैरुपचितवपुः केशसंस्कारधूपै
र्बन्धुप्रीत्या भवनशिखिभिर्दत्तनृत्योपहारः ।

---

तिना चोक्तमशिथिलपरिरम्भैर्दत्तसंवाहनानीति । संवाह्यन्ते च सुरतश्रान्ताः प्रियैः एतत्कविरेव व च्यति सम्भोगान्ते मम समुचितोहस्तसंवाहनानामि ति। शिप्रा नाम काचित् तत्रत्या नदी तस्या वातः शि प्रावातः शिप्राग्रहणं शैत्यद्योतनार्थं प्रार्थना सुरतस्य याच्ञा तत्र चाटु करोति तथोक्तः पुनः सुरतार्थं प्रियवचनप्रयोक्तेत्यर्थः। कर्म्मण्यण् प्रत्ययः । प्रिय तमोवल्लभइव स्त्रीणां सुरतग्लानिं सम्भोगखेदं हरति नुदति चाटूक्तिभिर्विस्मृतपूर्वरतिखेदाः स्त्रियः प्रियतम प्रार्थनां सफलयन्तीति भावः॥ ३२॥

जालोद्गीर्णैरिति । जालोद्गीर्णैर्गवाक्षमार्गनि र्गतैः। जालं गवाक्ष आनाये जालके कपटे गणे इति यादवः। केशसंस्कारधूपैर्वनिताकेशवासना र्थैर्गन्धद्रव्यधूपैरित्यर्थः। अत्र संस्कारधूपयोस्ता दर्थ्येऽपि यूपदार्वादिवत्प्रकृतिविकाराभावादश्ववा सादिवत् षष्ठीसमासो न चतुर्थीसमासः। उपचि तवपुः परिपुष्टशरीरः। बन्धौ बन्धुरिति वा प्रीत्या भवनशिखिभिर्गृहमयूरै र्दत्तोनृत्यमेवोपहार

हर्म्यैस्तस्याः कुसुमसुरभिष्वध्वखेदं नयेथाः
लक्ष्मीं पश्यन् ललितवनितापादरागाङ्कितेषु ॥ ३३ ॥
भर्त्तुः कण्ठच्छविरिति गणैः सादरं वीक्ष्यमाणः
पुण्यं यायास्त्रिभुवनगुरोर्धाम चण्डीश्वरस्य।

---

उपायनं यस्मै स तथोक्तः। उपायनमुपग्राह्यमु पहारस्तथोपदेत्यमरः। कुसुमैः सुरभिषु सुगन्धिषु ललितवनिताः सुन्दरस्त्रियः। ललितं त्रिषु सुन्द रमिति शब्दार्णवः। तासां पादरागेण लाक्षार सेनाङ्कितेषु चिह्नितेषु हर्म्येषु धनिकभवनेषु अस्या उज्जयिन्याः लक्ष्मीं पश्यन् अध्वना अध्वगमनेन खेदं क्लेशं नयेथाः अपनय ॥ ३३ ॥

भर्त्तुरिति। भर्त्तुः स्वामिनोनीलकण्ठस्य भगवतः कण्ठस्येव छविर्यस्यासौ कण्ठच्छविरिति हेतोर्गणैः प्रमथैः। गणास्तु गणनायां स्यात् गणेशे प्रमथे चय इति शब्दार्णवः। सादरं यथा तथा वीक्ष्यमाणः सन्। प्रियवस्तुसादृश्यादतिप्रियं भवे दिति भावः। त्रयाणां भुवनानां समाहारस्त्रिभु वनं तद्धितार्थेत्यादिना समासः। तस्य गुरोश्चण्डी श्वरस्य कात्यायनीवल्लभस्य पुण्यं पावनं धाम महा कालाख्यं स्थानं यायाः गच्छ। विध्यर्थे लिङ्। श्रेय स्करत्वात्सर्वथा यातव्यमिति भावः। उक्तञ्च स्कान्दे। आकाशे तारकं लिङ्गं पाताले हाटकेश्वरम्।

धूतोद्यानं कुवलयरजोगन्धिभिर्गन्धवत्या
स्तोयक्रीडानिरतयुवतिस्नानतिक्तैर्मरुद्भिः ॥ ३४ ॥
अप्यन्यस्मिन् जलधर महाकालमासाद्य काले
स्थातव्यं ते नयनविषयं यावदत्येति भानुः ।

---

मर्त्त्यलोके महाकालं दृष्ट्वा काममवाप्नुयादिति । न केवलं मुक्तिस्थानमिदं किन्तु विलासस्थानमपी त्याह धूतेति । कुवलयरजोगन्धिभिरुत्पलपराग गन्धवद्भिः तोयक्रीडासु निरतानामासक्तानां युव तीनां स्नानं स्नानीयं चन्दनादि करणे ल्युट् । स्ना नीयेऽभिषवे स्नानमिति यादवः । तेन तिक्तैः सुर भिभिः । कटुतिक्तकषायास्तु सौरभे च प्रकीर्त्तिता इति हलायुधः । सौगन्ध्यातिशयार्थं विशेषणद्वयम् । गन्धवत्या नाम नद्यास्तत्त्यायामरुद्भिर्म्मारुतैर्धूतोद्यानं कम्पिताक्रीडमिति धाम्नो विशेषणम् ॥ ३४ ॥

अपीति । हे जलधर महाकालं नाम पूर्व्वो क्तं चण्डीश्वरस्थानम् अन्यस्मिन् सन्ध्यातिरिक्तेऽपि काले आसाद्य प्राप्य ते तव स्थातव्यं त्वया स्थातव्य मित्यर्थः । कृत्यानां कर्त्तरि वेति षष्ठी । यावत् यावताकालेन भानुः सूर्य्यो नयनविषयं दृष्टिपथ मत्येति अतिक्रामति अस्तमयकालपर्य्यन्तं स्थात व्यमित्यर्थः । यावदित्येतदवधारणार्थे । यावत्ता वच्च साकल्येऽवधौ मानेऽवधारण इत्यमरः । किम

कुर्वन् सन्ध्यावलिपटहतां शूलिनः श्लाघनीया
मामन्द्राणां फलमविकलं लप्स्यसे गर्जितानाम् ॥ ३५ ॥
पादन्यासैः क्वणितरशनास्तत्र लीलावधूतैः
रत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः ।

र्थमत आह कुर्व्वन्निति । श्लाघनीयां प्रशंस्यां शूलिनः शिवस्य सन्ध्यायां वलिः पूजा तत्र पटहतां कुर्व्वन् सम्पादयन् आमन्द्राणामीषद्गम्भीराणां गर्ज्जितानामविकलमखण्डं फलं लप्स्यसे प्राप्स्यसि । लभेः कर्त्तरि लृट् । महाकालनाथवलिपटहत्वेन विनियोगात्ते गर्ज्जितसाफल्यं स्यादित्यर्थः ॥ ३५ ॥

पादन्यासैरिति । तत्र सन्ध्याकाले पादन्यासैश्चरणनिक्षेपैः क्वणिताः शब्दायमाना रशना यासां तास्तथोक्ताः । क्वणतेरकर्म्मकत्वाद्गत्यर्थाकर्म्मकेत्यादिना कर्त्तरि क्तः । लीलया विलासेनावधूतैः कम्पितैः रत्नानां कङ्कणमणीनां छायया कान्त्या खचिता रूषिता वलयश्चामरदण्डा येषां तैः । वलिश्चामरदण्डे च जराविश्लथचर्म्मणीति विश्वः । चामरैर्वालव्यजनैः क्लान्तहस्ताः । एतेन दैशिकं नृत्यं सूचितम् । तदुक्तं नृत्यसर्व्वस्वे । खड्गकन्दुकवस्त्रादिदण्डिकाचामरस्रजः । वीणाञ्च धृत्वा यत्कुर्य्युर्नृत्यं तद्दैशिकं भवेदिति । वेश्याः महाकालनाथमुपेत्य नृत्यन्त्यो गणिकाः त्वत्तो नखपदेषु नखक्षतेषु सुखान् सुख

वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रबिन्दू
नामोक्ष्यन्ते त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान् ॥ ३६ ॥
पश्चादुच्चैर्भुजतरुवनं मण्डलेनाभिलीनः
सान्ध्यं तेजः प्रतिनवजवापुष्परक्तं दधानः।

---

करान्। सुखहेतौ सुखे सुखमिति शब्दार्णवः। वर्ष
स्याग्रबिन्दून् प्राप्य त्वयि मधुकरश्रेणिदीर्घान् कटा
क्षानपाङ्गानामोक्ष्यन्ते। परैरुपकृताः सन्तः सद्यः
प्रत्युपकुर्वन्तीति भावः। कामिनीदर्शनीयत्व लक्षणं
शिवोपासनाफलं सद्यो लप्स्यस इति ध्वनिः॥ ३६ ॥

पश्चादिति। पश्चात् सन्ध्याबल्यनन्तरं पशुपतेः
शिवस्य नृत्यारम्भे ताण्डवप्रारम्भे प्रतिनवजवापुष्प
रक्तं प्रत्यग्रजवाकुसुमारुणं सन्ध्यायां भवं सान्ध्यं
तेजो दधानः उच्चैरुन्नतं भुजा एव तरवस्तेषां वनं
मण्डलेन मण्डलाकारेणाभिलीनः अभिव्याप्तः
सन्। कर्त्तरि क्तः। भवान्या भवपत्न्या। इन्द्रवरु
णभवशर्वेति ङीष् आनुगागमश्च। शान्तः उद्वेगोग
जाजिनदर्शनभयं ययोस्ते अतएव स्तिमिते निश्चले
नयने यस्मिन् कर्म्मणि तत् तथोक्तम्। उद्वेगस्त्वरिते
क्लेशे भये मन्थरगामिनीति शब्दार्णवे। भक्तिः
पूज्येष्वनुरागः। भावार्थे क्तिन् प्रत्ययः। दृष्टा भ
क्तिर्यस्य स दृष्टभक्तिः सन् पशुपते आर्द्रं शोणितार्द्रं
यन्नागाजिनं गजचर्म्म। अजिनं चर्म्म कृत्तिः स्त्रीत्य

नृत्यारम्भे हर पशुपतेरार्द्रनागाजिनेच्छां
शान्तोद्वेगस्तिमितनयनं दृष्टभक्तिर्भवान्या ॥ ३७ ॥
गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं
रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः ।

---

सरः । तत्त्वेच्छां हर निवर्त्तय त्वमेव तत्स्थाने भवे त्यर्थः । गजासुरमर्द्दनानन्तरं भगवान् महादेव स्तदीयमार्द्राजिनं भुजमण्डलेन बिभ्रत्ताण्डवं चका रेति प्रसिद्धिः ॥ ३७ ॥

इत्थं महाकालनाथस्य सेवाप्रकारमभिधाय पुनरपि नगरसञ्चारप्रकारमाह

गच्छन्तीति । तत्रोज्जयिन्यां नक्तं रात्रौ रमण वसतिं प्रियभवनं प्रति गच्छन्तीनां योषितामभिसा रिकाणामित्यर्थः । सूचिभिः भेद्यैरतिसान्द्रैरित्यर्थः । तमोभिः रुद्धालोके निरुद्धदृष्टिप्रसरे नरपतिपथे राजमार्गे कनकस्य निकषः निकष्यत इति व्युत्पत्त्या निकषोपलरेखा तद्वत् स्निग्धं तेजो यस्यास्तया । स्निग्धन्तु मसृणे सान्द्रे रम्ये क्लीवे च तेजसीति श ब्दार्णवे । सुदाम्नाद्रिणा एकदिक् सौदामनी विद्यु त् । तेनैकदिगित्यण् प्रत्ययः । तया उर्व्वीं मार्गं दर्शय । किञ्च तोयोत्सर्गस्तनिताभ्यां वृष्टिगर्ज्जिताभ्यां मुखरः शब्दायमानो मास्म भूः कुतस्ता यो षितो विक्लवा भीरवः ततो वृष्टिगर्ज्जिते न कार्य्ये

सौदामन्या कनकनिकषस्निग्धया दर्शयोर्वी
तोयोत्सर्गस्तनितमुखरो मास्म भूर्विक्लवास्ताः ॥ ३८ ॥
तां कस्याञ्चिद्भवनवलभौ सुप्तपारावतायां
नीत्वा रात्रिं चिरविलसनात् खिन्नविद्युत्कलत्रः ।
दृष्टे सूर्य्ये पुनरपि भवान् वाहयेदध्वशेषं
मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ ३९ ॥

---

इत्यर्थः । नात्र तोयोत्सर्गसहितं स्तनितमिति विग्रहः विशिष्टस्यैव केवलस्तनितस्याप्यनिष्टत्वात् । नच द्वन्द्वपक्षे अल्पाच्तरपूर्वनिपातशास्त्रविरोधः लक्षणहेत्वोः क्रियाया इत्यत्र सूत्र एव विपरीतनिर्देशेन पूर्वनिपातशास्त्रस्यानित्यत्वज्ञापनादिति ॥ ३८ ॥

तामिति । चिरं विलसनात् स्फुरणात् खिन्नं विद्युदेव कलत्रं यस्य स भवान् सुप्ताः पारावताः कलरवा यस्यां विविक्तायामित्यर्थः । पारावतः कलरवः कपोत इत्यमरः । जनसञ्चारस्तत्रासम्भावित एवेति भावः कस्याञ्चिद्भवनवलभौ गृहाच्छादनोपरिभाग इत्यर्थः । आच्छादनं स्याद्वलभी गृहाणामिति हलायुधः । तां रात्रिं नीत्वा दृष्टे सूर्य्ये सति दिने सतीत्यर्थः । पुनरप्यध्वशेषं वाहयेत् । तथाहि सुहृदां मित्राणामभ्युपेता अङ्गीकृता अर्थस्य प्रयोजनस्य कृत्या क्रिया यैस्ते अभ्युपेतसुहृदर्था इत्यर्थः । सापेक्षत्वेपि गमकत्वात्समासः । कृत्या क्रियादेवतयोः कार्य्ये

तस्मिन् काले नयनसलिलं योषितां खण्डितानां
शान्तिं नेयं प्रणयिभिरतो वर्त्म भानोस्त्यजाशु ।
प्रालेयास्रं कमलवदनात्सोऽपि हर्त्तुं नलिन्याः
प्रत्यावृत्तस्त्वयि कररुधि स्यादनल्पाभ्यसूयः ॥ ४० ॥

---

स्वीति यादवः । न मन्दायन्ते खलु न मन्दा भवन्ति
हि न विलम्बन्त इत्यर्थः । लोहितादिडाज्भ्यः क्यष्
इति क्यष् । वा क्यष इत्यात्मनेपदम् ॥ ३९ ॥

तस्मिन्निति । तस्मिन् काले पूर्व्वोक्ते सूर्य्योदय
काले प्रणयिभिः प्रियतमैः खण्डितानां योषितां
नायिकाविशेषाणाम् । ज्ञातेऽन्यासङ्गविकृते खण्ड
तेर्ष्याकषायितेति दशरूपके । नयनसलिलं शान्तिं
नेयं नेतव्यम् । नयतिर्द्विकर्म्मकः । अतो हेतोः भा
नोर्वर्त्म आशु शीघ्रं त्यज तस्यावरको माभूरित्यर्थः ।
विपक्षे अनिष्टमाचष्टे सोऽपि भानुः नलिनान्यम्बु
जानि यस्याः सन्तीति नलिनी पद्मिनी तस्याः स्व
कान्तायाः कमलं स्वकुसुममेव वदनं यस्मात् प्रा
लेयं हिममेवास्रमश्रु हर्त्तुं शमयितुं प्रत्यावृत्तः प्र
त्यागतः । नलिन्यास्च भर्त्तुर्भानोर्देशान्तरगमनात्
खण्डितात्वमित्याशयः । ततस्त्वयि करानंशून् रुण
द्धीति कररुत् । क्विप् । तस्मिन् कररुधि सति
हस्तरोधिनि सतीति च गम्यते । बलिहस्तांशवः
करा इत्यमरः । अनल्पाभ्यसूयोऽधिकविद्वेषः स्यात् ।

गम्भीरायाः पयसि सरितश्चेतसीव प्रसन्ने
छायात्मापि प्रकृतिसुभगो लप्स्यते ते प्रवेशम्।
तस्मादस्याः कुमुदविशदान्यर्हसि त्वं न धैर्य्या
न्मोघीकर्त्तुं चटुलशफरोद्वर्त्तनप्रेक्षितानि॥ ४१॥

प्रायेणेच्छाविशेषविघातात् रोषोद्वेषश्च कामिनां भवतीति भावः। किञ्च आत्मानं चार्कमीशानं विष्णुं वा द्वेष्टि योजनः। श्रेयांसि तस्य नश्यन्ति रौरवञ्च भवेत् ध्रुवमिति निषेधात्कार्य्यहानिर्भवि ष्यतीति ध्वनिः॥ ४०॥

गम्भीराया इति। गम्भीरा नाम सरित् उ दारा नयिका च ध्वन्यते। तस्याः प्रसन्नेऽनुरक्तत्वा द्दोषरहिते चेतसीव प्रसन्नेऽतिनिर्म्मले पयसि प्रकृत्या स्वभावेनैव सुभगः सुन्दरः। सुन्दरेऽधिक भाग्ये च दुर्हि नेतरवासरे तुरीयांशे श्रीमति च सुभग इति शब्दार्णवे। ते तव छाया चासावात्मा च सोऽपि प्रतिबिम्बशरीरञ्च प्रवेशं लप्स्यते अपि शब्दात् प्रवेशमनिच्छोरपीति भावः। तस्मात् छा याद्वारापि प्रवेशावश्यम्भावित्वात् अस्या गम्भीरायाः कुमुदवद्विशदानि धवलानि चटुलानि शीघ्राणि शफराणां मीनानामुद्वर्त्तनानि उल्लुण्ठनान्येव प्रेक्षि तान्यवलोकनानि। त्रिषु स्याच्चटुलं शीघ्रमिति विश्वः। एतावदेव गम्भीराया अनुरागलिङ्गम्।

तस्याः किञ्चित्करधृतमिव प्राप्तवानीरशाखं
नीत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम् ।
प्रस्थानं ते कथमपि सखे लम्बमानस्य भावि
ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः ॥ ४२ ॥

---

धैर्य्याद्द्राघ्णार्द्रैमत्यादिति यावत् मोघीकर्त्तुं विफली
कर्त्तुं नार्हसि नानुरक्ता विप्रलब्धव्येत्यर्थ ॥ ४१ ॥

तस्या इति । हे सखे प्राप्ता वानीरशाखा वेतस
शाखा येन तत्तथोक्तम् अतएव किञ्चिदीषत्कर
धृतं हस्तावलम्बितमिव स्थितं मुक्तस्त्यक्तो रोध
स्तटमेव नितम्बः कटको येन तत्तथोक्तम् । नितम्बः
पश्चिमे श्रोणिभागेऽद्रिकटके कटाविति यादवः ।
नीलं कृष्णवर्णं तस्या गम्भीरायाः सलिलमेव
वसनं नीत्वा अपनीय । प्रस्थानसमये प्रेयसीवसन
ग्रहणं विरहतापविनोदनार्थमिति प्रसिद्धम् ।
लम्बमानस्य पीतसलिलभराल्लम्बमानस्य अन्यत्र
जघनारूढस्य ते तव प्रस्थानं प्रयाणं कथमपि कृ
च्छ्रेण भावि । कृच्छ्रत्वे हेतुमाह ज्ञातेति । ज्ञा
तास्वादोऽनुभूतरसः कः पुमान् विवृतं प्रकटीकृतं
जघनं कटिस्तत्पूर्व्वभागो वा यस्यास्ताम् । जघनं
स्यात् कटौ पूर्व्व श्रोणिभागापरांशयोरिति यादवः ।
विहातुं त्यक्तुं समर्थः न कापीत्यर्थः ॥ ४२ ॥

त्वदिति । त्वन्निष्यन्देन तव वृष्ट्या उच्छ्वसि

त्वन्निष्यन्दोच्छ्वसितवसुधागन्धसम्पर्करम्यः
स्रोतोरन्ध्रध्वनितसुभगं दन्तिभिः पीयमानः ।
नीचैर्वास्यत्युपजिगमिषोर्देवपूर्वं गिरिं ते
शीतो वायुः परिणमयिता काननोदुम्बराणाम् ॥४३॥

ताया उपबृंहितायाः वसुधाया भूमेः गन्धस्य सम्पर्केण रम्यः सुरभिरित्यर्थः । स्रोतःशब्देनेन्द्रियवाचिना तद्विशेषो घ्राणं लक्ष्यते । स्रोतोम्बुवेगेन्द्रिययो रित्यमरः । स्रोतोरन्ध्रेषु नासाग्रकुहरेषु यत् ध्वनितं शब्दस्तेन सुभगं यथा तथा दन्तिभिः गजैः पीयमानो वसुधागन्धलोभादाघ्रायमाणइ त्यर्थः । अनेन मान्द्यमुच्यते । काननेषु वनेषु उदुम्बराणां जन्तुफलानाम् । उदुम्बरे जन्तु फलो यज्ञाङ्गो हेमदुग्धकद्रूत्यमरः । परिणम यिता परिपाकयिता । मितां ह्रस्व इति ह्रस्वः । शीतो वायुः देवपूर्व्वं देवशब्दपूर्व्वं गिरिं देवगि रिमित्यर्थः । उपजिगमिषोरुपगन्तुमिच्छोः । गमेः सनन्तादुप्रत्ययः । ते तव नीचैः शनैर्वास्यति त्वां वी जयिष्यतीत्यर्थः । सम्बन्धमात्रविवक्षायां षष्ठी । देव पूर्व्वं गिरिमित्यत्र देवपूर्व्वत्वं गिरिशब्दस्य नतु सं ज्ञिनस्तदर्थस्येति संज्ञायाः संज्ञित्वाभावादवाच्यव चनं दोषमाहुरालङ्कारिकाः । तदुक्तमेकावल्याम् । यदवाच्यस्य वचनं स्यात्तदवाच्यवचनं ग्रथितमिति ।

तत्र स्कन्दं नियतवसतिं पुष्पमेघीकृतात्मा
पुष्पासारैः स्नपयतु भवान् व्योमगङ्गाजलार्द्रैः।
रक्षाहेतोर्नवशशिभृता वासवीनां चमूना
मत्यादित्यं हुतवहमुखे सम्भृतं तद्धि तेजः॥ ४४॥

समाधानन्तु देवशब्दविशेषितेन गिरिशब्देन शब्द परेण मेघोपगमयोग्योदेवगिरिर्लक्ष्यते इति कथञ्चित् सम्पाद्यम्॥ ४३॥

तत्रेति। तत्र देवगिरौ नियता वसतिर्यस्य तं नित्यसन्निहितमित्यर्थः। पुरा किल तारकास्यासुरविजयसन्तुष्टसुरप्रार्थनावशाद्भगवान् भवानीनन्दनः स्कन्दो नित्यमहमिह सह शिवाभ्यां वसामीत्युक्त्वा तत्र वसतीति प्रसिद्धिः। स्कन्दं कुमारं स्वामिनं पुष्पाणां मेघः पुष्पमेघः पुष्पमेघीकृतात्मा कामरूपत्वात् पुष्पवर्षुकमेघीकृतविग्रहः सन् व्योमगङ्गाजलार्द्रैः पुष्पासारैः पुष्पसम्पातैः। धारासम्पात आसार इत्यमरः। भवान् स्वयमेव स्नपयतु अभिषिञ्चतु स्वयं पूजायाः उत्तमत्वादिति भावः। तथाच शम्भुरहस्ये। स्वयं यजति चेद्देवमुत्तमा सोदरात्मजैः। मध्यमा याजयेद्भृत्यैरधमा याजनक्रियेति। स्कन्दस्य पूज्यत्वसमर्थनेनार्थेनार्थान्तरं न्यस्यति रक्षेति। तत् भगवान् स्कन्द इत्यर्थः विधेयप्राधान्यान्नपुंसकनिर्देशः।

ज्योतिर्लेखावलयि गलितं यस्य बर्हं भवानी
पुत्त्रप्रेम्णा कुवलयदलप्रापि कर्णे करोति ।
धौतापाङ्गं हरशशिरुचा पावकेस्तं मयूरं
पश्चादद्रिग्रहणगुरुभिर्गर्ज्जितैर्नर्त्तयेथाः ॥ ४५ ॥

वासवस्येमाः वासव्यः । तस्येदमित्यण् । तासां वासवी नामैन्द्रीणां चमूनां सेनानां रक्षाहेतोः रक्षार्थं नव शशिभृता भगवता चन्द्रशेखरेण । वहतीति वहः पचाद्यच् । हुतस्य वहो हुतवहो वह्निः तस्य मुखे सम्भृतं सञ्चितम् आदित्यमतिक्रान्तमत्यादित्यम । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः । ते जोहि । साक्षाद्भगवतो हरस्येव मूर्त्त्यन्तरमित्य र्थः । अतः पूज्यमिति भावः । मुखग्रहणन्तु शुद्धत्वद्योतनार्थम् । तदुक्तं शम्भुरहस्ये । गवां पश्चात् द्विजस्याङ्घ्रिर्योगिनां हृत् कवेर्वचः । परं शुचितमं विद्यान्मुखं स्त्रीवह्निवाजिनामिति ॥ ४४ ॥

ज्योतिरिति । ज्योतिषस्तेजसो लेखाराज यस्तासां वलयं मण्डलं यस्यास्तीति तयोक्तं गलितं भ्रष्टं नतु लोल्यात् स्वयं छिन्नमिति भावः यस्य मयूरस्य बर्हं पिच्छम् । पिच्छबर्हे नपुंसके इत्य मरः । भवानी गौरी पुत्रप्रेम्णा पुत्रस्नेहेन कुव लयस्य दलं पत्रं तत्प्रापि तद्योगि यथा तथा कर्णे करोति दलेन सह धारयतीत्यर्थः । यद्वा कुवल

आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा
सिद्धद्वन्द्वैर्जलकणभयाद्वीणिभिर्मुक्तमार्गः ।
व्यालम्बेथाः सुरभितनयालम्भजां मानयिष्यन्
स्रोतोमूर्त्त्या भुवि परिणतां रन्तिदेवस्य कीर्त्तिम् ॥ ४६ ॥

---

यस्य दलप्रापि दलभाजि दलार्हं कर्णे करोति । क्विवन्तात्सप्तमी । दलं परिहृत्य तत्स्थाने वर्हं धत्तइत्यर्थः । नाथस्तु कुवलयदलक्षेपीति पाठमाह । क्षेपो निन्दाप्रसारणं वेति । हरशशिरुचा हरशिरश्चन्द्रिकया धौतापाङ्गं स्वतोपि शौक्ल्यादतिधवलितनेत्रान्तम् । अपाङ्गौ नेत्रयोरन्तावित्यमरः । पावकस्याग्नेरपत्यं पावकिः स्कन्दः । अत इञीति इञ् । तस्य तं पूर्वोक्तं मयूरं पश्चात् पुष्पाभिषेचनानन्तरम् अद्रेर्देवगिरेः कर्त्तुः ग्रहणेन गुहासंक्रमणेन गुरुभिः प्रतिध्वानमहद्भिरित्यर्थः । गर्ज्जितैर्नर्त्तयेथाः नृत्यङ्कारय मार्दङ्गिकभावेन भगवन्तं कुमारमुपासस्वेति भावः । नर्त्तयेथा इत्यत्र अणावकर्म्मकाच्चित्तवत्कर्त्तृकादित्यात्मनेपदापवादः निगरणचलनार्थेभ्यश्चेति परस्मैपदं न भवति तस्य न पादम्याङ्यमपरिमुहरुचिनृतिवदवस इति प्रतिषेधात् ॥ ४५ ॥

आराध्येति । एनं पूर्वोक्तं शरा वाणतृणानि । शरो वाणे वाणतृणे इति शब्दार्णवे । तेषां वनं

त्वय्यादातुं जलमवनते शार्ङ्गिणो वर्णचौरे
तस्याः सिन्धोः पृथुमपि तनुं दूरभावात्प्रवाहम्।

शरवणम्। पलिरन्तःशरेत्यादिना णत्वम्। तत्र भवो जन्म यस्य तं शरवणभवम्। अवर्ज्यौ बहुव्रीहिर्व्यधिकरणोजन्माद्युत्तरपद इति वामनः। अवर्ज्यः अगतिकत्वादाश्रयणीय इत्यर्थः। देवं स्कन्दम्। आराध्य उपास्य वीणिभिर्वीणावद्भिः। व्रीह्यादित्वादिनिः। सिद्धद्वन्द्वैः सिद्धमिथुनैः भगवन्तं स्कन्दमुपवीणयितुमागतैरिति भावः। जलकणभयात् जलसेकस्य वीणाक्वणनप्रतिबन्धकत्वादिति भावः। मुक्तमार्गस्त्यक्तवर्त्मा सन् उल्लङ्घिताध्वा क्रियन्तमध्वानं गत इत्यर्थः। सुरभितनयानां गवामालम्भेन संज्ञपनेन जायते इति तथोक्तां भुवि लोके स्रोतोमूर्त्त्या प्रवाहरूपेण परिणतां रूपविशेषमापन्नां रन्तिदेवस्य दशपुरपतेर्महाराजस्य कीर्त्तिं चर्म्मण्वत्याख्यां नदीमित्यर्थः। मानयिष्यन् सत्करिष्यन् व्यालम्बेथाः आलम्बावतरेरित्यर्थः। पुरा किल राज्ञो रन्तिदेवस्य गवालम्भेष्वेकत्र सम्भृताद्रक्तनिष्यन्दाच्चर्म्मराशेः काचिन्नदी सस्यन्दे सा चर्म्मण्वतीति ख्यायत इति ॥ ४६ ॥

त्वयीति। शार्ङ्गिणः कृष्णस्य वर्णस्य कान्तेश्चौरे वर्णचौरे तत्तुल्यवर्णे इत्यर्थः। त्वयि जलमादातुमव

प्रेक्षिष्यन्ते गगनगतयो नूनमावर्ज्य दृष्टी
रेकं मुक्तागुणमिव भुवः स्थूलमध्येन्द्रनीलम् ॥ ४७॥

तामुत्तीर्य्य व्रज परिचितभ्रूलताविभ्रमाणां
पक्ष्मोत्क्षेपादुपरिविलसत्कृष्णसारप्रभाणाम्।
कुन्दक्षेपानुगमधुकरश्रीमुषामात्मविम्बं
पात्रीकुर्व्वन् दशपुरवधूनेत्रकौतूहलानाम् ॥ ४८ ॥

---

नते सति पृथुमपि दूरभावात् दूरत्वात्तनुं सूक्ष्मतया प्रतीयमानं तस्याः सिन्धोश्चर्म्मण्वत्याख्यायाःप्रवाहं गगने गतिर्येषां ते गगनगतयः खेचराः सिद्धगन्धर्व्वादयः। अयमपि बहुव्रीहिः पूर्व्ववत् जन्माद्युत्तरपदेषु द्रष्टव्यः। नूनं सत्यं दृष्टीरावर्ज्य नियम्य एकम् एकयष्टिकं स्थूलो महान् मध्यो मध्यमणीभूत इन्द्रनीलो यस्य तं भुवो भूमेः मुक्तागुणं मुक्ताहारमिव प्रेक्षिष्यन्ते। अत्रात्यन्तनीलमेघसङ्गतस्य प्रवाहस्य भूकण्ठमुक्तागुणत्वेनोत्प्रेक्षणादुत्प्रेक्षैवेयमिति इव शब्देन व्यज्यते। निरुक्तकारस्तु तत्र तत्रोपमा यत्र इवशब्दस्य दर्शनमितीवशब्ददर्शनादत्राप्युपमैवेति बभ्राम ॥४७॥

तामिति। तां चर्म्मण्वतीमुत्तीर्य्य भ्रुवो लताइव भ्रूलता उपमित समासः। तासां विभ्रमा विलासाः परिचिताः क्षुण्णा येषु तेषां पक्ष्माणि नेत्रलोमानि। पक्ष्म सूत्रे च सूक्ष्मांशे किञ्जल्के नेत्रलोमनीति शाश्वतः। तेषामुत्क्षेपादुन्नमनाद्धेतोः कृष्णाश्च ताः शा

ब्रह्मावर्त्तं जनपदमथ च्छायया गाहमानः
क्षेत्रं क्षत्रप्रधनपिशुनं कौरवं तद्भजेथाः ।
राजन्यानां शितशरशतैर्यत्र गाण्डीवधन्वा
धारापातैस्त्वमिव कमलान्यभ्यवर्षन्मुखानि ॥ ४९ ॥

---

राश्च कृष्णशाराः नीलशाराः । वर्णोवर्णेनेति समासः । कृष्णरक्तसिताः शारा इति यादवः । ततश्च शारश ब्दादेव सिद्धे कार्ष्ण्ये पुनः कृष्णपदोपादानं कार्ष्ण्यप्र धान्यार्थम् । उपरि विलसन्तः कृष्णशाराः प्रभाः येषां तेषां कुन्दानि माध्यकुसुमानि तेषां क्षेप इतस्ततश्चालनं तस्यानुगाः अनुसारिणो ये मधुक रास्तेषां श्रियं मुष्णन्तीति तथोक्तानां क्षिप्यमाणकु न्दानुधावि मधुकरकल्पानामित्यर्थः । दशपुरं रन्तिदेवस्य नगरं तस्य वध्वः स्त्रियः । वधूर्जाया स्नुषा स्त्रीचेत्यमरः । तासां नेत्रकौतूहलानां नेत्रा भिलाषाणां साभिलाषदृष्टीनामित्यर्थः । आत्म विम्बं स्वमूर्त्तिं पात्रीकुर्व्वन् विषयीकुर्व्वन् व्रज गच्छ ॥ ४८ ॥

ब्रह्मावर्त्तमिति । अथ अनन्तरं ब्रह्मावर्त्तं नाम जनपदं देशं आह मनुः । सरस्वतीदृषद्वत्यो र्देवनद्योर्यदन्तरम् । तं देवनिर्म्मितं देशं ब्रह्मा वर्त्तं प्रचक्षत इति । छायया नातपमण्डलेन गाह मानः प्रविशन् नतु स्वरूपेण । पीठक्षेत्राश्रमा

हित्वा हालामभिमतरसां रेवतीलोचनाङ्कां
बन्धुप्रीत्या समरविमुखो लाङ्गली याः सिषेवे ।
कृत्वा तासामभिगममपां सौम्य सारस्वतीना
मन्तःशुद्धस्त्वमपि भविता वर्णमात्रेण कृष्णः ॥ ५० ॥

दीनि परित्यज्यान्यतो व्रजेदिति वचनात्। क्षत्र प्रधनपिशुनम् अद्यापि शिरः कपालादिमत्तया कुरुपाण्डव युद्धसूचकमित्यर्थः। युद्धमायोधनं जन्यं प्रधनं प्रविदारणमित्यमरः। तत्प्रसिद्धं कुरूणामिदं कौरवं क्षेत्रं भजेथाः कुरुक्षेत्रं व्रजेत्यर्थः। यत्र कुरुक्षेत्रे गाण्डी अस्यास्तीति गाण्डीवं धनुर्विशेषः। गाण्डग्जगात्संज्ञायामिति मत्वर्थीयोवप्रत्ययः। कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकावित्यमरः। तद्धनुर्यस्य स गाण्डीवधन्वा अर्जुनः। वा संज्ञाया मित्यनङादेशः। शितशरशतैः निशितबाणसहस्रैः राजन्यानां राज्ञां मुखानि धारागामुदकधाराणां पातैः कमलानि त्वमिवाभ्यवर्षदभिमुखं दृष्टवान् शरवर्षेण शिरांसि चिच्छेदेत्यर्थः ॥ ४९ ॥

हित्वेति। बन्धुप्रीत्या कुरुपाण्डवस्नेहेन नतु भयेन समरविमुखो युद्धनिस्पृहः लाङ्गलमस्यास्तीति लाङ्गलीहलधरः अभिमतरसामभीष्टस्वादां तथा रेवत्याः स्वप्रियाया लोचने एवाङ्कः प्रतिबिम्बितत्वा चिह्नं यस्यास्तां हालां सुराम्। सुरा हलिप्रिया हाले

तस्माद्गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्म्मिहस्ता ॥ ५१ ॥

---

त्यमरः। अभिप्रयुक्तं देशभाषापदमित्यत्र हले हालेति देशभाषापदमप्यतीव कविप्रयोगात्साध्वि त्युदाजहार वामनः। हित्वा त्यक्त्वा दुस्त्यजामपीति भावः। याः सारस्वतीरपः सिषेवे। हे सौम्य सुभग त्वं तासां सरस्वत्या नद्याइमाः सारस्वत्यस्तासाम भिगमं सेवां कृत्वा अन्तःअन्तरात्मनि शुद्धो निर्म्मलो निर्द्दोषो भविता। अपि सद्य एव पूतोभविष्यसी त्यर्थः। वर्त्तमानसामीप्ये वर्त्तमानवद्वेति वर्त्तमानप्र त्ययः। वर्णमात्रेण वर्णेनैव कृष्णः श्यामः नतु पापे नेत्यर्थः अन्तःशुद्धिरेव सम्पाद्या नतु वाह्या वहिःशु द्धोऽपि हतबधप्रायश्चित्तार्थं सारस्वतसलिलसेवी तत्र भगवान् वलभद्रएव निदर्शनम्। अतो भवतापि सरस्वती सर्व्वथा सेवितव्येति भावः॥ ५० ॥

तस्मादिति। तस्मात् कुरुक्षेत्रात् कनखलस्याद्रेः समीपे अनुकनखलम्। अनुर्यत्समयेत्यव्ययीभावः। शैलराजाद्धिमवतोऽवतीर्णां सगरतनयानां स्वर्गसो पानपङ्क्तिं स्वर्गप्राप्तिसाधनभूतामित्यर्थः जह्नोर्नाम राज्ञः कन्यां जाह्नवीं गच्छेर्गच्छ। विध्यर्थे लिङ्।

तस्याः पातुं सुरगज इव व्योम्नि पश्चार्द्धलम्बी
त्वञ्चेदच्छस्फटिकविशदं तर्कयेस्तिर्य्यगम्भः।
संसर्पन्त्या सपदि भवतः स्रोतसि च्छाययासौ
स्यादस्थानोपगतयमुनासङ्गमेवाभिरामा॥ ५२॥

या जाह्नवी गौर्य्या वक्त्रे या भ्रुकुटिरचना सापत्न्य
रोषात् भ्रुभङ्गकरणं तां फेनैर्विहस्य अवहस्येव धा
वल्यात् फेनानां हासत्वेनोत्प्रेक्षा। इन्दौ शिरोमा
ल्यभूते लग्ना ऊर्म्मय एव हस्ता यस्याः सा इन्दु
लग्नोर्म्मिहस्ता सती शम्भोः केशग्रहणमकरोत्। यथा
काचित्प्रौढ़ा नायिका सपत्नीमसहमाना स्वभर्त्तारं
सह शिरोरत्नेन केशेष्वाकर्षति तद्वदिति भावः।
इदञ्च पुरा किल भगीरथप्रार्थनया भगवतीं गगन
पथात्पतन्तीं गङ्गां गङ्गाधरो जटाजूटेन जग्राहेति
कथामुपजीव्योक्तम्॥ ५१॥

तस्या इति। सुरगज इव कश्चिद्दिग्गज इव
व्योम्नि पश्चादर्द्धं पश्चार्द्धम्। पृषोदरादित्वात् साधुः।
तेन लम्बत इति पश्चार्द्धलम्बी सन् पश्चार्द्धभागेन
व्योम्नि स्थित्वा पूर्व्वार्द्धेन जलोन्मुख इत्यर्थः। केचित्
पूर्व्वार्द्धलम्बीति पठन्ति। अच्छस्फटिकविशदं नि
र्म्मलस्फटिकावदातं तस्या गङ्गाया अम्भस्तिर्य्यक्
तिरश्चीनं यथा तथा पातुं त्वं तर्कयेर्विचारयेश्चेत्।
सपदि स्रोतसि प्रवाहे संसर्पन्त्या संक्रामन्त्या

आसीनानां सुरभितशिलं नाभिगन्धैर्मृगाणां
तस्या एव प्रभवमचलं प्राप्य गौरं तुषारैः ।
वक्ष्यस्यध्वश्रमविनयने तस्य शृङ्गे निषण्णः
शोभां शुभ्रत्रिनयनवृषोत्खातपङ्कोपमेयाम् ॥ ५३ ॥

---

भवतः छायया प्रतिविम्बेनासौ गङ्गा अस्थाने प्रया गादन्यत्र उपगतः प्राप्तोयमुना सङ्गमो यया सा तथाभूतेवाभिरामा स्यात् ॥ ५२ ॥

आसीनानामिति । आसीनानामुपविष्टानां मृगाणां कस्तूरिका मृगाणाम् । अन्यथा नाभिग न्धानुपपत्तेः । नाभिगन्धैः कस्तूरीगन्धैः तेषां तदु द्भवत्वादतएव मृगनाभिसंज्ञा च । मृगनाभिर्मृग मदः कस्तूरीत्यमरः । अथवा नाभयः कस्तूर्यः । नाभिः प्रधाने कस्तूर्यां मदे च क्वचिदीरित इति विश्वः । तासां गन्धैः सुरभिताः सुरभिकृताः शिला यस्य स तं तस्या गङ्गायाएव प्रभवत्यस्मादिति प्रभवः कारणं तुषारैर्गौरं सितम् । अवदातः सितो गौर इत्यमरः । अचलं प्राप्य विनीयतेऽनेनेति वि नयनं करणे ल्युट् । अध्वश्रमस्य विनयने अपनोदके तस्य हिमाद्रेः शृङ्गे निषण्णः सन् शुभ्रोयस्त्रिनय नस्य त्र्यम्बकस्य वृषो वृषभः । सुकृते वृषभे वृष इत्यमरः । तेनोत्खातेन विदारितेन पङ्केन सह उपमेयामुपमातुमर्हां शोभां वक्ष्यसि वोढासि । वह

तञ्चेद्वायौ सरति सरलस्कन्धसङ्घट्टजन्मा
बाधेतोल्काक्षपितचमरीबालभारो दवाग्निः ।
अर्हस्येनं शमयितुमलं वारिधारासहस्रै
रापन्नार्त्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम ॥ ५४ ॥

---

तेर्लट् । विनयनेत्यत्र पूर्व्वपदात्संज्ञायामग इति
णत्वं न भवति । क्षुम्नादिषु चेति निषेधात् । तस्याः
प्रभवमित्यादिना हिमाद्रौ मेघस्य वैवाहिको गृह
विहारो ध्वन्यते ॥ ५३ ॥

तमिति । वायौ वनवाते सरति वाति सति
सरलानां देवदारुद्रुमाणां स्कन्धाः प्रदेशविशेषाः ।
अस्त्री प्रकाण्डः स्कन्धः स्यान्मूलाच्छाखावधेस्तरोरि
त्यमरः । तेषां सङ्घट्टनेन सङ्घर्षणेन जन्म यस्य स
तथोक्तः । जन्मोत्तरपदत्वाद्व्यधिकरणोपि बहु
व्रीहिः साधुरित्युक्तम् । उल्काभिः स्फुलिङ्गैः क्षपिता
निर्दग्धाश्चमरीणां बालभाराः केशसमूहायेन दव
एवाग्निर्दवाग्निर्व्वनवह्निः । वने च वनवह्नौ च
दवोदाव इवेष्यत इति यादवः । तं हिमाद्रिं बाधेत
चेत् पीड़येद्यदि एनं दवाग्निं वारिधारासहस्रैः शम
यितुमर्हसि । युक्तञ्चैतदित्याह उत्तमानां महतां
सम्पदः समृद्धयः आपन्नानामार्त्तानामार्त्तिप्रशमन
मापन्निवारणमेव फलं प्रयोजनं यासां तास्तथोक्ता

ये संरम्भोत्पतनरभसाः स्वाङ्गभङ्गाय तस्मिन्
मुक्ताध्वानं सपदि शरभा लङ्घयेयुर्भवन्तम् ।
तान् कुर्वीथास्तुमुलकरकावृष्टिपातावकीर्णान्
के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ ५५ ॥

---

हि अतो हिमाचलस्य दावानलस्त्वया शमयितव्य इति भावः ॥ ५४ ॥

य इति । तस्मिन् हिमाद्रौ संरम्भः कोपः । संरम्भः संभ्रमे कोप इति शब्दार्णवः । तेनोत्पतने उत्प्लवने रभसो वेगो येषां ते तथोक्ताः । रभसो वेगहर्षयोरित्यमरः । ये शरभा अष्टापदमृगविशेषाः । शरभः शलभे चाष्टापदे प्रोक्तो मृगान्तर इति विश्वः । मुक्तोऽध्वा शरभोत्प्लवनमार्गो येन तं भवन्तं सपदि स्वाङ्गभङ्गाय लङ्घयेयुः । सम्भावनायां लिङ् । भवतोऽतिदूरत्वात् स्वाङ्गभङ्गातिरिक्तं फलं नास्ति लङ्घनस्येत्यर्थः । तान् शरभान् तुमुलाः सङ्कुलाः करकाः वर्षोपलाः । वर्षोपलस्तु करकेत्यमरः। तासां वृष्टिस्तस्याःपातेनावकीर्णान् विच्छिन्नान् कुर्वीथाः कुरुष्व । विध्यर्थे लिङ् । क्षुद्रोऽप्यधिक्षिपन् प्रतिपक्षः सद्यः प्रतिक्षेप्तव्य इति भावः । तथा हि आरभ्यन्त इत्यारम्भाः कर्म्माणि तेषु यत्न उद्योगः स निष्फलोयेषां ते तथोक्ताः । [ निष्फलकर्म्मोपक्रमा इत्यर्थः । अतः के वा परिभवपदं तिरस्कारपदं न

तत्र व्यक्तं दृषदि चरणन्यासमर्द्धेन्दुमौलेः
शश्वत्सिद्धैरुपचितवलिं भक्तिनम्नः परीयाः ।
यस्मिन् दृष्टे करणविगमादूर्द्ध्वमुद्धूतपापाः
सङ्कल्पन्ते स्थिरगणपदप्राप्तये श्रद्दधानाः ॥ ५६ ॥

षुर्न भवन्ति सर्व्व एव भवन्तीत्यर्थः । यदत्र घनोपलस्तु करक इति यादववचनात् करकशब्दस्य नियतपुंलिङ्गताभिप्रायेण करकाणामाहृष्टिरिति केषाञ्चिद्व्याख्यानं तदन्ये नानुमन्यन्ते वर्षोपलस्तु करकेत्यमरवचनव्याख्याने क्षीरस्वामिना कमण्डलौ च करकः सुगते च विनायक इति नानार्थे पुंस्यपि वक्ष्यतीति वदता उभयलिङ्गताप्रकाशनात् । यादवस्य तु पुंलिङ्गताविधाने तात्पर्य्यं नतु स्त्रीलिङ्गतानिषेध इति न तद्विरोधोऽपि । करकस्तु करङ्के स्याद्दाडिमे च कमण्डलौ। पक्षिभेदे करे चापि करका च घनोपल इति विश्वप्रकाशवचने तूभयलिङ्गता व्यक्तैवेति न कुत्रापि विरोधवार्त्ता । अतएव रुद्रः वर्षोपलस्तु करका करकोऽपि च दृश्यते इति॥ ५५ ॥

तत्रेति । तत्र हिमाद्रौ दृषदि कस्याञ्चिच्छिलायां व्यक्तं प्रकटं शश्वत्सदा सिद्धैर्योगिभिः । सिद्धिर्निष्पत्तियोगयोरिति विश्वः । उपचितवलिं रचितपूजाविधिम् । वलिः पूजोपहारयोरिति यादवः । अर्द्धश्चासाविन्दुश्चेत्यर्द्धेन्दुः । अर्द्धः खण्डे समेंऽशके इति

शब्दायन्ते मधुरमनिलैः कीचकाः पूर्य्यमाणाः
संसक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः ।

विम्बः । स मौलौ यस्य तस्येश्वरस्य चरणन्यासं पादविन्यासं भक्तिः पूज्येष्वनुरागस्तया नम्रः सन् परीयाः प्रदक्षिणं कुरु । परिपूर्व्वादिणो लिङ् । यस्मिन् पादन्यासे दृष्टे सद्यउद्धूतपापा निरस्तक लमषाः सन्तः श्रद्दधाना विश्वसन्तः पुरुषाः । श्रद्धा विश्वासः आस्तिक्यबुद्धिरिति यावत् । श्रदन्तरो रुपसर्गवद्वृत्तिर्वक्तव्येति श्रत्पूर्व्वात् दधातेः शान च् । करणस्य चेतस्य विगमादूर्द्धं देहत्यागानन्तरम् । करणं साधकतं चेत्रगात्रेन्द्रियेषु चेत्यमरः । स्थिरं शाश्वतं गणानां प्रमथानां पदं स्थानम् । गणाः प्रम थसंख्यौघा इति वैजयन्ती । तस्य प्राप्तये सङ्कल्पन्ते समर्था भवन्ति । क्लृपेः पर्य्याप्तिवचनस्य अलमर्थत्वात् तद्योगे नमःस्वस्तीत्यादिना चतुर्थी । अलमिति पर्य्याप्त्यर्थग्रहणमिति भाष्यकारः । अव्यक्तं व्यञ्जया मास शिवः श्रीचरणद्वयम् । हिमाद्रौ शाम्भवा दीनां सिद्धये सर्व्वकर्म्मणाम् । दृष्ट्वा श्रीचरणन्यासं साधकः स्थितये तनुम् । इच्छाधीनशरीरोहि वि चरेच्च जगत्त्रयमिति शङ्करहस्ये ॥ ५६ ॥

शब्दायन्त इति । हे मेघ अनिलैः पूर्य्यमाणाः कीचका वेणुविशेषाः । वेणवः कीचकास्ते स्युर्ये स्वन

निर्ह्रादस्ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्
सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः ॥ ५७ ॥

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान् विशेषान्
हंसद्वारं भृगुपतियशोवर्त्म यत् क्रौञ्चरन्ध्रम् ।

---

न्तरनिलोद्धता इत्यमरः । मधुरं श्रुतिसुखं यथा तथा शब्दायन्ते शब्दं कुर्वन्ति स्वनन्तीत्यर्थः । शब्दवैरेत्यादिना क्यङ् । अनेन वंशवाद्यसम्पत्तिरुक्ता । संसक्ताभिः संयुक्ताभिः वंशवाद्यानुषक्ताभिर्वा । संरक्ताभिरिति पाठे संरक्तकण्ठीभिरित्यर्थः । किन्नरीभिः किन्नरस्त्रीभिः । त्रयाणां पुराणां समाहारस्त्रिपुरम् । तद्धितार्थोत्तरपदेति समासः पात्रादित्वान्नपुंसकत्वम् । तस्य विजयो गीयते कन्दरेषु दरीषु । दरीतु कन्दरो वा स्त्रीत्यमरः । ते तव निर्ह्रादो मुरजे वाद्यभेदे ध्वनिरिव मुरजध्वनिरिवेत्यर्थः । स्याच्चेत्तर्हि तत्र चरणसमीपे पशुपतेर्नित्यसन्निहितस्य शिवस्य सङ्गीतं सम्यक् गीतं तदेवार्थः सङ्गीतार्थः सङ्गीतवस्तु । अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिष्वित्यमरः । समग्रः सम्पूर्णोभावी ननु भविष्यति खलु । भविष्यति गम्यादय इति भविष्यदर्थे णिनिः ॥ ५७॥

प्रालेयेति । प्रालेयाद्रेर्हिमाद्रेरुपतटं तटसमीपे । अव्ययं विभक्तीत्यादिना समीपार्थेऽव्ययीभावः । तांस्तान् । वीप्सायां द्विरुक्तिः । विशे

तेनोदीचीं दिशमनुसरेस्तिर्य्यगायामशोभी
श्यामः पादो बलिनियमनाभ्युद्यतस्येव विष्णोः ॥ ५८॥

---

षान् दृष्टव्यार्थान्। विशेषोऽवयवे द्रव्ये दृष्टव्योत्तमवस्तुनीति शब्दार्णवः । अतिक्रम्य अनुसरेरित्यनागतेन सम्बन्धः । हंसानां द्वारं हंसद्वारम् । मानसयायिनो हंसाः क्रौञ्चरन्ध्रेण सञ्चरन्त इत्यागमः । भृगुपतेर्जामदग्न्यस्य यशोवर्त्म यशःप्रवृत्तिकारणमित्यर्थः। यत् क्रौञ्चस्याद्रेरन्ध्रमस्ति तेनक्रौञ्चविलेन बलेर्दैत्यस्य नियमने बन्धनेऽभ्युद्यतस्य प्रवृत्तस्य विष्णोर्व्यापकस्य त्रिविक्रमस्य श्यामःकृष्णवर्णः पादइव तिर्य्यगायामेन क्षिप्रप्रवेशनार्थं तिरश्चीनदैर्घ्येण शोभत इति तथाविधः सन् उदीचीमुत्तरां दिशमनुसरेनुगच्छ । पुरा किल भगवतो देवाद्धूर्जटेर्द्धनुरुपनिषदमधीयानेन भृगुनन्दनेन स्कन्दस्य स्पर्द्धया क्रौञ्चशिखरिणमतिनिशितविशिखमुखेन हेलया रन्ध्रिपिण्डभेदं भित्त्वा तत एव क्रौञ्च क्रोडादिव सद्यः समुज्जृम्भिते कस्मिन्नपि यशःक्षीरनिधौ निखिलमपि जगज्जालमाप्लावितमिति कथा श्रूयते ॥ ५८ ॥

गत्वेति । क्रौञ्चविलनिर्गमनानन्तरम् ऊर्द्ध्वञ्च गत्वा दशमुखस्य रावणस्य भुजैर्बाहुभिरुच्छ्वासिताः विश्लेषिताः प्रस्थानां सानूनां सन्धयोयस्य स तस्य । त्रयोदश परिमाणमेषामस्तीति त्रिद

गत्वा चोर्द्ध्वं दशमुखभुजोच्छ्वासितप्रस्थसन्धेः
कैलासस्य त्रिदशवनितादर्पणस्यातिथिः स्याः।
शृङ्गोच्छ्रायैः कुमुदविशदैर्यो वितत्य स्थितः खं
राशीभूतः प्रतिदिनमिव त्र्यम्बकस्याट्टहासः॥५८॥
उत्पश्यामि त्वयि तटगते स्निग्धभिन्नाञ्जनाभे
सद्यःकृत्तद्विरददशनच्छेदगौरस्य तस्य।

---

सः। संख्ययाव्ययेत्यादिना बहुव्रीहिः। बहुव्रीहौ संख्येयेत्यादिना समासान्तो डजिति चीरस्वामी। त्रिदशानां देवानां वनितास्तासां दर्पणस्य। कैलासस्य स्फाटिकत्वाद्रजतत्वाद्वा विम्बग्राहित्वेनेदमुक्तम्। कैलासस्यातिथिः स्याः। यः कैलासः कुमुदविशदैः निर्म्मलैः शृङ्गाणामुच्छ्रायैरौन्नत्यैः खमाकाशं वितत्य व्याप्य प्रतिदिनं दिनेदिने राशीभूतः त्र्यम्बकस्य त्रिलोचनस्याट्टहासोऽतिहास इव स्थितः। अट्टावतिशयक्षामाविति यादवः। धावल्याद्धासत्वेनोत्प्रेक्षा। हासादीनां धावल्यं कविसमयसिद्धम्॥५८॥

उत्पश्यामीति। स्निग्धं मसृणं भिन्नं मर्द्दितञ्च यदञ्जनं कज्जलं तस्याभेवाभा यस्य तस्मिन् त्वयि तटगते सानुं गते सति सद्यः कृत्तस्य छिन्नस्य द्विरददशनस्य गजदन्तस्य छेदवत् गौरस्य धवलस्य तस्य अद्रेः कैलासस्य मेचके श्यामले। कालश्यामलमेचका इत्यमरः। वाससि वस्त्रे अंसन्यस्ते सति हल

शोभामद्रेस्तिमितनयनप्रेक्षणीयां भवित्री
मंसन्यस्ते सति हलभृतोमेचके वाससीव ॥ ६० ॥

हित्वा तस्मिन् भुजगवलयं शम्भुना दत्तहस्ता
क्रीड़ाशैले यदि च विचरेत् पादचरेण गौरी ।
भङ्गीभक्त्या विरचितवपुः स्तम्भितान्तर्जलौघः
सोपानत्वं कुरु मणितटारोहणायाग्रयायी ॥ ६१ ॥

---

हलभृतोबलभद्रस्येव स्तिमिताभ्यां नयनाभ्यां प्रेक्षणीयां शोभां भवित्रीं भाविनीमुत्पश्यामि शोभा भविष्यतीति तर्कयामीत्यर्थः । श्रौती पूर्णोपमालङ्कारः ॥६०॥

हित्वेति । तस्मिन् क्रीडाशैले कैलासे । कैलासः कनकाद्रिश्च मन्दरोगन्धमादनः । क्रीडार्थं निर्म्मिताः शम्भोर्देवैः क्रीडाद्रयोऽभवन्निति शम्भुरहस्ये । शम्भुना शिवेन भुजगमेव वलयं कङ्कणं हित्वा गौर्य्याभीरुत्वात् त्यक्त्वा दत्तहस्ता सती गौरीपादचारेण विचरेद्यदि तर्हि अग्रयायी पुरोगतः तथा स्तम्भितो घनीभावं प्रापितोऽन्तर्ज्जलस्यौघः प्रवाहो येन स तथाभूतः भङ्गीनां पर्व्वणां भक्त्या रचनया विरचितवपुःकल्पितशरीरः सन् मणीनां तटम् मणितटं तस्यारोहणाय सोपानत्वं कुरु सोपानभावं भजेत्यर्थः ॥ ६१ ॥

तत्रेति । तत्र कैलासे अवश्यं सर्व्वथा सुरयुवतयो वलयकुलिशानि कङ्कणकोटयः । शतकोटिवाचिना कुलिशशब्देन कोटिमात्रं लक्ष्यते तैरुद्घट्टनानि

तत्रावश्यं वलयकुलिशोद्घट्टनोद्गीर्णतोयं
नेष्यन्ति त्वां सुरयुवतयो यन्त्रधारागृहत्वम्।
ताभ्यो मोक्षस्तव यदि सखे घर्म्मलब्धस्य न स्यात्
क्रीडालोलाः श्रवणपरुषैर्गर्जितैर्भीषयेस्ताः॥ ६२॥
हेमाम्भोजप्रसवि सलिलं मानसस्यादद्दानः
कुर्व्वन् कामं क्षणमुखपटप्रीतिमैरावतस्य।

---

...धाराः स्तैरुद्गीर्णमुत्सृष्टं तोयं येन तं त्वां यन्त्रेषु धाराः यन्त्रधारास्तासां गृहत्वं कृत्रिमधारागृहत्वं नेष्यन्ति प्रापयिष्यन्ति हे सखे मित्र घर्म्मे निदाघे लब्धस्य। घर्म्मलब्धत्वञ्चास्य देवभूमिषु सर्वदा सर्व्वर्तुसमाहारात् प्राथमिकमेघत्वाद्वा यथोक्तमाषाढ़स्य प्रथमेति। तव ताभ्यःसुरयुवतिभ्यःमोक्षोन स्याद्यदि तदा क्रीडालोलाःक्रीड़ासक्ताः प्रमत्ता इत्यर्थः ताःसुरयुवतीःश्रवणपरुषैःकर्णकटुभिर्गर्जितैःकरणैर्भीषयेस्त्रासयेः।अत्र हेतुभयाभावादात्मनेपदं पुगागमश्च न॥६२॥

हेमेति। हे जलद हेमाम्भोजानां प्रसविजनकं मानसस्य सरसः सलिलमाददानः पिवन्नित्यर्थः। तथैरावतस्येन्द्रगजस्य। कामचारित्वाद्वा शिवसेवार्थमिन्द्रागमनाद्वा समागतस्येति भावः। क्षणेजलदानकाले मुखे पटेन या प्रीति स्तां कुर्व्वन्। तथा कल्पद्रुमाणां किशलयानि पल्लवभूतानि अंशुकानि सूक्ष्मवस्त्राणीव। अंशुकं वस्त्रमात्रे स्यात् परि

धुन्वन् कल्पद्रुमकिशलयान्यंशुकानीव वातै
र्नानाचेष्टैर्जलद ललितैर्निर्विशेस्तं नगेन्द्रम् ॥६३॥
तस्योत्सङ्गे प्रणयिन इव स्रस्तगङ्गादुकूलां
न त्वं दृष्ट्वा न पुनरलकां ज्ञास्यसे कामचारिन्।

---

धानोत्तरीययोः। सूक्ष्मवस्त्रे नातिदीर्घावविति शब्दार्णवे। वातैर्मेघवातैर्धुन्वन्। नाना बहुविधाश्चेष्टास्तोयपानादयो येषु तैर्ललितैः क्रीड़ितैः। ना भावभेदे स्त्रीनृत्ये ललितं त्रिषु सुन्दरे। अस्त्रियां प्रमदागारे क्रीडिते जातपल्लवे इति शब्दार्णवः। तं नगेन्द्रं कैलासं कामं यथेष्टं निर्विशेः समुपभुङ्क्ष्व। निर्वेशो भृतिभोगयोरित्यमरः। यथेच्छ विहारो मित्रगृहेषु मैत्राः फलम्। सहजमित्रञ्च ते कैलासः। मेघपर्वतयोरजस्रयोरब्धिचन्द्रयोः शिखिजीमूतयोः समीराग्न्योराश्मित्रता स्वयमिति भावः॥ ६३॥

तस्येति। प्रणयिनः प्रियतमस्येव तस्य कैलासस्योत्सङ्गे ऊर्द्धभागे कटौ च। उत्सङ्गोमुक्तसंयोगे सक्थ्यन्यूर्द्धतलेपि चेति मालतीमालायाम्। गङ्गा दुकूलं शुभ्रवस्त्रमिवेत्युपमितसमासः। दुकूलं सूक्ष्मवस्त्रे स्यादुत्तरीये सितांशुक इति शब्दार्णवः। अन्यत्र तु गङ्गेवदुकूलम्। तत् स्रस्तं यस्यास्तां तथोक्तामलकां कुवेरनगरीं दृष्ट्वा कामिनीमिवेति शेषः। हे कामचारिन् त्वं पुनस्त्वन्तु न ज्ञास्यसे इति न किन्तु

या वः काले वहति सलिलोद्गारमुच्चैर्विमाना
मुक्ताजालग्रथितमलकं कामिनीवाभ्रवृन्दम् ॥ ६४ ॥

त्रास्यस एवेत्यर्थः । कामचारिणस्ते पूर्व्वमपि बहु
कृत्वोदर्शनसम्भवादविज्ञानमसम्भावितमेवेति निश्च
यार्थं नञ्द्वयप्रयोगः । तदुक्तं स्मृतिनिश्चयसिद्धा
र्थेषु नञ्द्वयप्रयोग इति । उच्चैरुन्नतानि विमाना
नि सप्तभूमिकभवनानि यस्यां सा । विमानोऽस्त्री
देवयाने सप्तभूमौ च सद्मनीति यादवः । मेघसंवाह
नस्थानसूचनार्थमिदं विशेषणम् । अन्यत्र विमाना
निष्कोपा । या अलका वो युष्माकं काले मेघकाल इ
त्यर्थः अभ्रवृन्दं मेघकदम्बकं कामिनी स्त्री मुक्ताजा
लैर्मौक्तिकसरैर्ग्रथितं प्रत्युप्तम् । पुंस्त्वस्त्र्यां मौक्तिके मु
क्तेति यादवः । अलकमिव चूर्णकुन्तलानीव जात्येक
वचनम् । अलकाश्चूर्णकुन्तला इत्यमरः । वहति
बिभर्त्ति । अत्र कैलासस्यानुकूलनायकत्वम् अलका
यास्तु स्वाधीनपतिकाख्यनायिकात्वं ध्वन्यते । एका
यत्तोऽनुकूलः स्यादिति, प्रियोपलालिता नित्यं स्वाधी
नपतिका मतेति च लक्षयन्ति । उदाहरन्ति च
लालयन्नलकप्रान्तान् रचयन् पत्रमञ्जरीम् । एका
विनोदयन् कान्तां छायावदनुवर्त्तते इति ॥ ६४ ॥

इति श्रीकोलाचलमल्लिनाथ सूरिविरचितायां मेघसन्देशव्याख्यायां
सञ्जीवन्यां पूर्व्वमेघः ॥

# मेघदूतम् ।

## उत्तरमेघः ।

विद्युत्वन्तं ललितवनिताः सेन्द्रचापं सचित्राः
सङ्गीताय प्रहतमुरजाः स्निग्धगम्भीरघोषम् ।
अन्तस्तोयं मणिमयभुवस्तुङ्गमभ्रंलिहाग्राः
प्रासादास्त्वां तुलयितुमलं यत्र तैस्तैर्विशेषैः ॥ १ ॥

---

विद्युत्वन्तमिति । यत्रालकायां ललिता रम्या वनिताःस्त्रियो येषु ते सह चित्रैर्वर्त्तन्त इति सचित्राः । आलेख्याश्चर्य्ययोश्चित्रमित्यमरः । तेन सहेति तुल्ययोग इति बहुव्रीहिः । वोपसर्जनस्येति सह शब्दस्य समासः । सङ्गीताय तौर्य्यत्रिकाय प्रहतमुरजास्ताडितमृदङ्गाः मुरजा तु मृदङ्गे स्यादिति शब्दार्णवे । मणिमय्यो मणिविकारा भुवो येषु अभ्रं लिहन्तीत्यभ्रं लिहान्यभ्रङ्कषाणि । वहाभ्रे लिह इति खच्प्रत्ययः । अरुर्द्विषेत्यादिना मुमागमः । अग्राणि शिखराणि येषां ते तथोक्ताः अतितुङ्गा इत्यर्थः प्रासादा देवगृहाणि । प्रासादो देवभूभुजामित्यमरः । विद्युतोऽस्य सन्तीति विद्युत्वन्तं सेन्द्रचापमिन्द्रचापवन्तं स्नि

हस्ते लीलाकमलमलके बालकुन्दानुविद्धं
नीता लोध्रप्रसवरजसा पाण्डुतामानने श्रीः ।

ग्धः आव्यो गम्भीरो घोषो गर्जितं यस्य तम् अन्तर न्तर्गतं तोयं यस्य तं तुङ्गमुन्नतं त्वां तैस्तैर्व्विशेषै र्ल लित वनितत्वादिधर्म्मैस्तुलयितुं समीकर्तुम् अलं पर्य्याप्ताः । अलं भूषणपर्य्याप्तिशक्तिवारणवाचकमि त्यमरः ॥ १ ॥

सम्प्रति सर्व्वदा सर्व्वर्तुसम्पत्तिमाह

हस्त इति । यत्रालकायां वधूनां स्त्रीणां हस्ते ली लार्थं कमलं लीलाकमलं शरल्लिङ्गमेतत् तदुक्तं शरत् पङ्कजलक्षणेति । अलके कुन्तले जातावेकवचनम् । अलकेष्वित्यर्थः । बालकुन्दैः प्रत्यग्रमाघ्यकुसुमैरनु विद्धम् अनुवेधोग्रन्थनम् । नपुंसके भावे क्तः । यद्यपि कुन्दानां शैशिरत्वमस्ति माघ्यं कुन्दमित्यभिधानात् तथापि हेमन्ते प्रादुर्भावः शिशिरे प्रौढत्वमिति व्य वस्थाभेदेन हेमन्तकार्य्यत्वमित्याशयेन बालेतिवि शेषणम् । अलकमिति प्रथमान्तपाठे सप्तमीप्रक्रम भङ्गः स्यात् । नाथस्तु नियतपुंलिङ्गताहानिश्चेति दोषान्तरमाह तदसत् स्वभाववक्राण्यलकानि ता साम्, निर्धूतान्यलकानि पातितमुरः क्लान्तोरघः खण्डित इत्यादिषु प्रयोगेषु नपुंसकलिङ्गतादर्श नात् । आनने मुखे लोध्रप्रसवानां लोध्रपुष्पाणां

चूडापाशे नवकुरवकं चारु कर्णे शिरीषं
सीमन्ते च त्वदुपगमजं यत्र नीपं वधूनाम् ॥ २ ॥
यत्रोन्मत्तभ्रमरमुखराः पादपा नित्यपुष्पा
हंसश्रेणीरचितरसना नित्यपद्मा नलिन्यः ।

शैशिराणां रजसा परागेण । प्रसवस्तु फले पुष्पे वृक्षाणां गर्भमोचन इति विश्वः । पाण्डुतां नीता श्रीः शोभा । चूडापाशे केशपाशे नवकुरवकं वा सन्तः पुष्पविशेषः । कर्णे चारु पेशलं शिरीषं ग्रैष्मः पुष्पविशेषः । सीमन्ते मस्तककेशवीथ्याम् । सीमन्तमस्त्रियां मस्तकेशवीथ्यामुदाहृतमिति शब्दार्णवे । तवोपगमो मेघागम इत्यर्थः तत्र जातं त्वदुपगमजं वार्षिकमित्यर्थः नीपं कदम्बकुसुमम् । सर्वत्रास्तीति शेषः अस्तिर्भवति परः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति न्यायात् । इत्थं कमलकुन्दादि तत्तत्कार्य्यसमाहाराभिधानादर्थात् सर्वर्तुसमाहारसिद्धिः कारणं विना कार्य्यस्यासिद्धेरिति भावः ॥ २ ॥

यत्रेति । यत्र अलकायां पादपा वृक्षा नित्यानि पुष्पाणि येषां ते तथा नतु ऋतुनियमादिति भावः अतएवोन्मत्तैर्भ्रमरैर्मुखराः शब्दायमानाः । नलिन्यः पद्मिन्यो नित्यानि पद्मानि यासां तास्तथा नतु हेमन्तवर्जितमित्यर्थः । अतएव हंसश्रेणीभी

केकोत्कण्ठा भवनशिखिनो नित्यभास्वत्कलापा
नित्यज्योत्स्नाः प्रतिहततमोवृत्तिरम्या प्रदोषाः ॥३॥
आनन्दोत्थं नयनसलिलं यत्र नान्यैर्निमित्तै-
र्नान्यस्तापः कुसुमशरजादिष्टसंयोगसाध्यात्।
नाप्यन्यस्मात् प्रणयकलहाद्विप्रयोगोपपत्ति-
र्वित्तेशानां न च खलु वयो यौवनादन्यदस्ति ॥ ४ ॥

---

चितरसना नित्यं हंसपरिवेष्टिता इत्यर्थः भवन
शिखिनः क्रीडामयूरा नित्यं भास्वन्तः कलापा
बर्हाणि येषां ते तथोक्ताः नतु वर्षास्वेव अतएव
केकाभिरुत्कण्ठा उद्ग्रीवाः। प्रदोषा रात्रयः नित्या
ज्योत्स्ना यासां ताः नतु शुक्लपक्षएव। अतएव
प्रतिहता तमसां वृत्तिर्व्याप्तिर्येषां तेच ते रम्या
इति तथोक्ताः ॥ ३ ॥

आनन्दोत्थमिति। यत्रालकायां वित्तेशानां
यक्षाणाम्। वित्ताधिपः कुवेरः स्यात् प्रभौ धनिक
यक्षयोरिति शब्दार्णवे। आनन्दोत्थम् आनन्दजन्य
मेव नयनसलिलम् अन्यैर्निमित्तैः शोकादिभि र्न।
इष्टसंयोगेन प्रियजनसमागमेन साध्यान्निवर्त्तनीया
त्वत्प्रतीकार्य्यादित्यर्थः। कुसुमशरजान्मदनशर
जादन्यस्तापो नास्ति। प्रणयकलहादन्यस्मात्का
रणाद्विप्रयोगोपपत्तिर्विरहप्राप्तिरपि नास्ति। कि

यस्यां यक्षाः सितमणिमयान्येत्य हर्म्यस्थलानि
ज्योतिश्छायाकुसुमरचितान्युत्तमस्त्रीसहायाः ।
आसेवन्ते मधु रतिफलं कल्पवृक्षप्रसूतं
त्वद्गम्भीरध्वनिषु शनकैः पुष्करेष्वाहतेषु ॥ ५ ॥

---

न्त्र यौवनादन्यत् वयो वार्द्धकं नास्ति । श्लोकद्वयं प्रक्षिप्तम् ॥ ४ ॥

यस्यामिति । यस्यामलकायां यक्षा देवयोनिविशेषाः उत्तमस्त्री सहायाः ललिताङ्गनासहचराः सन्तः सितमणिमयानि स्फटिकमणिमयानि चन्द्रकान्तमयानि वा अतएव ज्योतिषां तारकाणां छायाः प्रतिविम्बान्येव कुसुमानि तैः रचितानि परिष्कृतानि । ज्योतिस्ताराग्निभा ज्वालादृक्पुत्त्रार्थाध्वरात्मस्विति वैजयन्ती । एतेन पानभूमेरम्लानशोभत्वमुक्तम् । हर्म्यस्थलान्येत्य प्राप्य त्वद्गम्भीरध्वनिरिव ध्वनि र्येषां तेषु पुष्करेषु वाद्यभाण्डमुखेषु। पुष्करं करिहस्ताग्रे वाद्यभाण्डमुखे जले इत्यमरः। शनकै र्मन्दमाहतेषु सत्सु एतच्च नृत्यगीतयोरप्युपलक्षणम् । कल्पवृक्षप्रसूतं कल्पवृक्षस्य काङ्क्षितार्थप्रदत्वान्मद्यमपि तत्र प्रसूतम् । रतिः फलं यस्य तद्रतिफलं मधु मद्यमासेवन्ते आवर्त्त्य पिवन्तीत्यर्थः ॥ ५ ॥

मन्दाकिन्या इति । यत्रालकायाममरप्रार्थिताः

मन्दाकिन्याः सलिलशिशिरैः सेव्यमाना मरुद्भि
र्मन्दाराणामनुतटरुहां छायया वारितोष्णाः ।
अन्वेष्टव्यैः कनकसिकतामुष्टिनिक्षेपगूढैः
संक्रीड़न्ते सखिभिरमरप्रार्थिता यत्र कन्याः ॥ ६ ॥
नीवीबन्धोच्छ्वसितशिथिलं यत्र बिम्बाधराणां
क्षौमं रागादनिभृतकरेष्वाक्षिपत्सु प्रियेषु ।

---

सुन्दर्य्य इत्यर्थः कन्या यत्तत्कुमार्य्यः । कन्या कुमारकानार्य्योरिति विश्वः । मन्दाकिन्यागङ्गायाः सलिलेन शिशिरैः शीतलैर्मरुद्भिः सेव्यमानाः सत्यः तथा अनुतटं तटेषु रोहन्तीत्यनुतटरुहः क्विप् । तेषां मन्दाराणां छायया अनातपेन वारितोष्णाः शमितातपाः सत्यः कनकस्य सिकतासु मुष्टिभिर्निक्षेपेण गूढ़ैः संवृतैः अतएव अन्वेष्टव्यैर्म्मृग्यैर्म्मणिभीरत्नैः संक्रीडन्ते गुप्तमणिसंज्ञया दैशिकक्रीडया सम्यक् क्रीडन्तीत्यर्थः । क्रीडोनुसंपरिभ्यश्चेत्यात्मनेपदम् । रत्नादौ वालुकादौ वा गुप्तद्रष्टव्यकर्म्मभिः । कुमारीभिः कृता क्रीडा नाम्ना गुप्तमणिः स्मृत इति शब्दार्णवः ॥ ६ ॥

नीवीति । यत्रालकायाम् अनिभृतकरेषु चपलहस्तेषु प्रियेषु नीवी वसनग्रन्थिः । नीवी परिपणे ग्रन्थौ स्त्रीणां जघनवाससीति विश्वः । सैव बन्धः नीवीबन्धः चूतवृक्षवदपौनरुक्त्यम् । तस्यो

अर्च्चिस्तुङ्गानभिमुखमपि प्राप्य रत्नप्रदीपान्
ह्रीमूढ़ानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥ ७ ॥
नेत्रा नीताः सततगतिना यद्विमानाग्रभूमी
रालेख्यानां नवजलकणैर्दोषमुत्पाद्य सद्यः ।

---

च्छ्वसितेन त्रुटितेन शिथिलं चौमं दुकूलं रागादा चिपत्सु आहरत्सु सत्सु ह्रीमूढ़ानां लज्जाविधुराणां विम्बं विम्बिकाफलम् । विम्बं फलं विम्बिकायाः प्रतिविम्बे च मण्डले इति विश्वः । विम्बमिवाधरो यासां तासां विम्बाधराणां स्त्रीविशेषाणाम् । विशेषाः कामिनी कान्ता भीरुर्विम्बाधराङ्गनेतिशब्दार्णवे । चूर्णस्य कुङ्कुमादेर्मुष्टिः अर्च्चिर्भिर्मयूखैस्तुङ्गान् । अर्च्चिर्मयूखशिखयोरिति विश्वः । रत्नान्येव प्रदीपान् अभिमुखं यथा तथा प्राप्यापि विफलप्रेरणा दीपनिर्व्वाणाचमत्वान्निष्फलचेपा भवतीति । अत्राङ्गनानां रत्नप्रदीपनिर्व्वाणप्रवृत्त्या मौग्ध्यं व्यज्यते ॥ ७ ॥

नेत्रेति । हे मेघ नेत्रा प्रेरकेण सततगतिना सदागतिना वायुना । मातरिश्वा सदागतिरित्यमरः । यस्या अलकाया विमानानां सप्तभूमिकभवनानामग्रभूमीरुपरिभूमिकाः नीताः प्रापिताः त्वमिव दृश्यन्त इति त्वादृशाः त्वत्सदृशा इत्यर्थः । त्यदादिषु दृशोनालोचने कञ्चेति कञ् प्रत्ययः ।

शङ्कास्पृष्टा इव जलमुचस्त्वादृशा यत्र जालै
र्धूमोद्गारानुकृतिनिपुणा जर्जरा निष्पतन्ति ॥ ८ ॥
यत्र स्त्रीणां प्रियतमभुजालिङ्गनोच्छ्वासितानाम्
अङ्गग्लानिं सुरतजनितां तन्तुजालावलम्बाः ।

---

जलमुचो मेघाः आलेख्यानां चित्राणाम् । चित्रं लिखितरूपाद्यं स्यादालेख्यमिति शब्दार्णवे । नवजलकणैर्दोषं स्फोटनमुत्पाद्य सद्यः शङ्कास्पृष्टा इव सापराधत्वाद्भयाविष्टा इव । शङ्का वितर्कभययोरिति शब्दार्णवः । धूमोद्गारस्य धूमनिर्गमस्यानुकृतौ अनुकरणे निपुणाः कुशलाः जर्जरा विशीर्णाः सन्तो जालमार्गैर्गवाक्षरन्ध्रैर्निष्पतन्ति निष्क्रामन्ति । यथा केनचिदन्तःपुरसञ्चारवता दूतेन गूढवृत्त्या रहस्यभूमिं प्रापितास्तत्र स्त्रीणां व्यभिचारदोषमुत्पाद्य सद्यः साशङ्काः प्राप्तवेशान्तरा जाराः क्षुद्रमार्गैर्निष्क्रामन्ति तद्वदिति ध्वनिः । प्रकृतार्थे शङ्कास्पृष्टा इवेत्युत्प्रेक्षा ॥ ८ ॥

यत्रेति । यत्रालकायां निशीथेऽर्द्धरात्रे । अर्द्धरात्रनिशीथौ द्वावित्यमरः । त्वत्संरोधस्य मेघावरणस्यापगमेन विशदैर्निर्मलैश्चन्द्रपादैश्चन्द्रमरीचिभिः । पादा रश्म्यङ्घ्रितुर्य्यांशा इत्यमरः । स्फुटजललवस्यन्दिन उल्लणाम्बुकरणस्वाविणः तन्तुजालावलम्बा वितानलम्बितमुक्तापुञ्जाधारास्तद्गुणगुम्फि

त्वत्संरोधापगमविशदैश्चन्द्रपादैर्निशीथे
व्यालुम्पन्ति स्फुटजललवस्यन्दिनश्चन्द्रकान्ताः ॥ ९ ॥
अक्षय्यान्तर्भवननिधयः प्रत्यहं रक्तकण्ठै
रुद्गायद्भिर्धनपतियशः किन्नरैर्यत्र सार्द्धम्।

---

ता इत्यर्थः चन्द्रकान्ताश्चन्द्रकान्तमणयः प्रियतमानां भुजैरालिङ्गनेषु उच्छ्वासितानां प्रशिथिलीकृतानां श्रान्त्या जलसेकाय वा शिथिलितालिङ्गनानामिति यावत्। स्त्रीणां सुरतजनितामङ्गग्लानिम् अवयवानां ग्लानतामिति यावत् व्यालुम्पन्ति अपनुदन्ति ॥ ९ ॥

अक्षय्येति। यत्रालकायां क्षेतुं शक्याः क्षय्याः। क्षय्यजय्यौ शक्यार्थे इति निपातः ततो नञ् समासः। भवनानामन्तरन्तर्भवने अव्ययं विभक्तीत्यादिनाव्ययीभावः। अक्षय्या अन्तर्भवने निधयो येषां ते तथोक्ताः। यथेच्छाभोगसम्भावनार्थमिदं विशेषणम्। विबुधवनिता अप्सरसस्ता एव वारमुख्या वेश्यास्ता एव सहाया येषां ते तथोक्ताः। वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः। सत्कृता वारमुख्या स्यादित्यमरः। बद्धालापाः सम्भावितसंलापाः कामिनः कामुकाः प्रत्यहमहन्यहनि अव्ययं विभक्तीत्यादिना समासः। रक्तो मधुरः कण्ठः कण्ठध्वनिर्येषां ते तैः सुन्दरकण्ठध्वनिभिः धनपतियशः कुबेरकीर्त्तिम् उद्गायद्भिः उच्चैर्गायद्भिः देवगानस्य गान्धा

वैभ्राजाख्यं विबुधवनितावारमुख्यासहायाः
बद्धालापा बहिरुपवनं कामिनो निर्विशन्ति ॥ १०॥
गत्युत्कम्पादलकपतितैर्यत्र मन्दारपुष्पैः
पत्रच्छेदैः कनककमलैः कर्णविभ्रंशिभिश्च ।
मुक्ताजालैस्तनपरिसरच्छिन्नसूत्रैश्च हारै
र्नैशो मार्गः सवितुरुदये सूच्यते कामिनीनाम् ॥ ११॥

---

रुच्चालापास्तारतरं गायद्भिरित्यर्थः । किन्नरैः सार्द्धं
सह विभ्राजस्येदं वैभ्राजं वैभ्राजमित्याख्या यस्य
तत् वैभ्राजाख्यम् । विभ्राजेन गणेन्द्रेण जातं वैभ्राज
नाख्ययेति शम्भुरहस्ये । चैत्ररथस्य नामान्तरमेतत् ।
बहिरुपवनं बाह्योद्यानं निर्विशन्त्यनुभवन्ति ॥१०॥

गतीति । यत्रालकायां कामिनीनामभिसारि
काणां निशि भवो नैशो मार्गः सवितुरुदये सति
गत्या गमनेनोत्कम्पः चलनं तस्माद्धेतोरलकेभ्यः
पतितैर्मन्दारपुष्पैः सुरतरुकुसुमैः । तथा पत्राणां
पत्रलतानां छेदैः खण्डैः पतितैरिति शेषः । तथा
कर्णेभ्यो विभ्रश्यन्तीति तैः कनकस्य कमलैः । षष्ठ्या
विवक्षितार्थलाभे सति मयटा विग्रहेऽध्याहारदोषः
एवमन्यत्राप्यनुसन्धेयम् । तथा मुक्ताजालैर्मौक्ति
कसरैः शिरोनिहितैरित्यर्थः । तथा स्तनयोः परि
सरः प्रदेशस्तत्र छिन्नानि सूत्राणि येषां तैर्हारैश्च

मत्वा देवं धनपतिसखं यत्र साक्षाद्वसन्तं
प्रायश्चापं न वहति भयान्मन्मथः षट्पदज्यम् ।
सभ्रूभङ्गप्रहितनयनैः कामिलक्ष्येष्वमोघै
स्तस्यारम्भश्चतुरवनिताविभ्रमैरेव सिद्धः ॥ १२ ॥

---

सूच्यते ज्ञाप्यते मार्गपतितमन्दारकुसुमादिलिङ्गै रयमभिसारिकाणां पन्था इत्यनुमीयत इत्यर्थः॥ ११॥

मत्वेति । यत्रालकायां मन्मथः कामो धनपतेः कुवेरस्य सखा इति धनपतिसखः । राजाहः सखि भ्यष्टच् । तं देवं महादेवं साक्षाद्वसन्तं सखिस्नेहा न्निजरूपेण वर्त्तमानं मत्वा ज्ञात्वा भयाद्भालेक्षणभ यात् षट्पदा एव ज्या मौर्वी यस्य तं चापं प्रायः प्राचुर्य्येण न वहति न बिभर्त्ति । कथं तर्हि तस्य कार्य्यसिद्धिरत आह सभ्रूभङ्गेति तस्य मन्मथस्यारम्भः कामिजनविजयव्यापारः सभ्रूभङ्गं प्रहितानि प्रयु क्तानि नयनानि दृष्टयो येषु तैस्तथोक्तैः कामिन एव लक्ष्याणि तेष्वमोघैः सफलप्रयोगैरित्यर्थः । मन्मथ चापोपि क्वचिदपि मोघः स्यादिति भावः । चतुराश्च ता वनिताश्च तासां विभ्रमैर्विलासैरेव सिद्धो नि ष्पन्नः । यदनर्थकरं पाक्षिकफलञ्च तत्प्रयोगाद्वरं निश्चित साधनप्रयोग इति भावः ॥ १२॥

कचधार्य्यं देहधार्य्यं परिधेयं विलेपनम । च

वासश्चित्रं मधु नयनयोर्विभ्रमादेशदक्षं
पुष्पोद्भेदं सह किसलयैर्भूषणानां विकल्पान् ।
लाक्षारागं चरणकमलन्यासयोग्यञ्च यस्या
मेकः सूते सकलमबलामण्डनं कल्पवृक्षः ॥ १२ ॥

---

तुर्द्धा भूषणं प्राज्ञः स्त्रीणामन्यच्च देशिकमिति रसा करे तदेवैतदाह

वास इति । यस्यामलकायां चित्रं नानावर्णं वासो वसनं परिधेयमण्डनमेतत् । नयनयोर्विभ्रमाणामादेशे दक्षम् । अनेन विभ्रमद्वारा मधुनो मण्डनत्वमनुसन्धेयम् । मधु मद्यम् । एतच्च मण्डनं देहधार्य्यैन्तर्भाव्यम् । किसलयैः पल्लवैः सह पुष्पोद्भेदम् उभयञ्चेत्यर्थः । इदन्तु कचधार्य्यम् । भूषणानां विकल्पान् विशेषान् देहधार्य्यमेतत् । तथा चरणकमलयोर्न्यासस्य समर्पणस्य योग्यं रज्यतेऽनेनेति रागो रञ्जकद्रव्यं लाक्षैव रागस्तं लाक्षारागञ्च । चकारः अङ्गरागादिविलेपनमण्डनोपलक्षणार्थः । सकलं सर्व्वं चतुर्विधमपीत्यर्थः । अबलामण्डनं योषित्प्रसाधनजातमेकः कल्पवृक्ष एव सूते जनयति । ननु नानासाधनसम्पादनप्रयास इत्यर्थः ॥ १२ ॥

इत्यमलकां वर्णयित्वा तत्र स्वभवनस्याभिज्ञानमाह

तत्रागारं धनपतिगृहानुत्तरेणास्मदीयं
दूराल्लक्ष्यं सुरपतिधनुश्चारुणा तोरणेन।
यस्योपान्ते कृतकतनयः कान्तया वर्द्धितो मे
हस्तप्राप्यस्तवकनमितो बालमन्दारवृक्षः॥ १४॥
वापी चास्मिन्मरकतशिलाबद्धसोपानमार्गा
हैमैश्छन्ना विकचकमलैः स्निग्धवैदूर्य्यनालैः।

---

तत्रेति। तत्रालकायां धनपतिगृहान् कुबेरगृहानुत्तरेणोत्तरस्मिन् दूरदेशे। एनवन्यतरस्यामदूरेपञ्चम्या इत्येनप्प्रत्ययः। एनया द्वितीयेति द्वितीया। गृहाः पुंसि च भूम्नेवेत्यमरः। अस्माकमिदमस्मदीयम्। वृद्धाच्छ इति पक्षे छप्रत्ययः। अगारं गृहं सुरपतिधनुश्चारुणा मणिमयत्वाद्बहुवर्णत्वाच्चेन्द्रचापसुन्दरेण तोरणेन वहिर्द्वारेण दूराल्लक्ष्यं दृश्यम् अनेनाभिज्ञानेन दूरत एव ज्ञातुं शक्यमित्यर्थः। अभिज्ञानान्तरमाह यस्यागारस्योपान्ते प्राकारान्तःपार्श्वदेशे मे मम कान्तया वर्द्धितः पोषितः कृतकतनयः कृत्रिमसुतः पुत्त्रत्वेनाभिमन्यमान इत्यर्थः। हस्तप्राप्यैर्हस्तावचेयैः स्तवकैर्गुच्छैर्नमितः। स्याद्गुच्छकस्तु स्तवक इत्यमरः। बालो मन्दारवृक्षः कल्पवृक्षोऽस्तीति शेषः॥ १४॥

पुनरभिज्ञानान्तरमाह चतुर्भिः

वापीति। अस्मिन्मदीयागारे मरकतशिला

यस्यास्तोये कृतवसतयो मानसं सन्निकृष्टं
नाध्यास्यन्ति व्यपगतशुचस्त्वामपि प्रेक्ष्य हंसाः ॥१५॥
तस्यास्तीरे रचितशिखरः पेशलैरिन्द्रनीलैः
क्रीड़ाशैलः कनककदलीवेष्टनप्रेक्षणीयः ।

---

शिबद्धः सोपानमार्गो यस्याः सा तथोक्ता विदूरे भवाः वैदूर्य्याः । विदूराञ्ञ्य इति ञ्यप्रत्ययः । वैदूर्य्याणां विकारा वैदूर्य्याणि । विकारार्थेऽण्प्रत्ययः । स्निग्धानि वैदूर्य्याणि नालानि येषां तैः हैमैः सौवर्णैर्विकचकमलैः छन्ना वापी च अस्तीति शेषः । यस्या वाप्यास्तोये कृतवसतयः कृतनिवासा हंसाः त्वां मेघं प्रेक्ष्यापि व्यपगतशुचो वर्षाकालेपि व्यपगत कलुषजलत्वाद्वीतदुःखाः सन्तः सन्निकृष्टं सन्निहितं सुगममपीत्यर्थः । मानसं नाध्यास्यन्ति नोत्कण्ठया स्मरिष्यन्ति । आध्यानमुत्कण्ठास्मरणमिति काशिकायाम् ॥ १५ ॥

तस्या इति । तस्या वाप्यास्तीरे पेशलैश्चारुभिः । चारौ दक्षे च पेशल इत्यमरः । इन्द्रनीलैः रचितशिखरः इन्द्रनीलमणिमयशिखर इत्यर्थः कनककदलीनां वेष्टनेन परिवेष्टनेन प्रेक्षणीयो दर्शनीयः क्रीडाशैलोऽस्तीति शेषः । हे सखे उपान्तेषु स्फुरितास्तडितो यस्य तत्तथोक्तम् । इदं विशेषणं कदलीसाम्यार्थमुक्तम् । इन्द्रनीलसाम्यन्तु

मद्गेहिन्याः प्रिय इति सखे चेतसा कातरेण
प्रेक्ष्योपान्तस्फुरिततडितं त्वां तमेव स्मरामि ॥१६॥
रक्ताशोकश्चलकिशलयः केसरश्चात्र कान्तः
प्रत्यासन्नौ कुरवकवृतेर्माधवीमण्डपस्य ।

---

मेघस्य स्वाभाविकमित्यनेन सूच्यते । त्वां प्रेक्ष्य मद्गेहिन्याः प्रिय इति हेतो स्तस्य शैलस्य मद्गृहिणीप्रियत्वाद्धेतोरित्यर्थः । कातरेण भीतेन चेतसा । भयञ्चात्र सानन्दमेव वस्तूनामनुभूतानां तुल्यश्रवणदर्शनात् । श्रवणात्कीर्त्तनाद्वापि सानन्दा भीर्य्यथा भवेदिति रसाकरे दर्शनात् । तमेव क्रीड़ाशैलमेव स्मरामि एवकारो विषयान्तरव्यवच्छेदार्थः । सदृशवस्त्वनुभवाद्दिष्टार्थस्मृतिर्जायत इत्यर्थः । अतएवात्र स्मरणाख्योऽलङ्कारः । तदुक्तं सदृशानुभवादन्यस्मृतिः स्मरणमुच्यत इति । निरुक्तकारस्तु त्वां तमेव स्मरामीति योजयित्वा मेघे शैलत्वारोपमाचष्टे तन्न अद्र्याकारारोपस्य पुरोवर्त्तिन्यनुभवात्मकत्वेन स्मरतिप्रयोगानुपपत्तेः । शैलत्वभावनास्मृतिरित्यपि नोपपद्यते भावनायाः स्मृतित्वे प्रमाणाभावात् साट्टश्योपन्यासस्य वैयर्थ्याच्च असदृशेऽपि शालग्रामे हरिभावनादर्शनादिति ॥१६॥

रक्तेति । अत्र क्रीड़ाशैले कुरवका एव वृतिरावरणं यस्य तस्य मधौ वसन्तेभवा माधव्यस्तासां

एकः सख्यास्तव सह मया वामपादाभिलाषी
काङ्क्षत्यन्यो वदनमदिरां दोहदच्छद्मनास्याः ॥१७॥

---

मण्डपस्यातिमुक्तलतागृहस्य। अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलतेत्यमरः। प्रत्यासन्नौ सन्निकृष्टौ चलकिसलयश्चञ्चलपल्लवः। अनेन वृक्षस्य पादताडनेषु प्राञ्जलित्वं व्यज्यते रक्ताशोकः रक्तविशेषणं तस्य स्मरोद्दीपकत्वादुक्तं प्रसूनकैरशोकस्तु श्वेतोरक्त इति द्विधा। बहुसिद्धिकरः श्वेतो रक्तोऽत्र स्मरवर्द्धन इत्यशोककल्पे दर्शनात्। कान्तः कमनीयः केसरो वकुलस्य। अथ केसरे वकुलो वञ्जुल इत्यमरः। स्त इति शेषः। एकस्तयोरन्यतरः प्राथमिकत्वादशोक इत्यर्थः मया सह तव सख्याः स्वप्रियाया इत्यर्थः। वामपादाभिलाषी दोहदच्छद्मनेत्यत्रापि सम्बन्धनीयम्। अन्यः केसरः दोहदं वृक्षादीनां प्रसवकारणं संस्कारद्रव्यम्। तरुगुल्मलतादीनामकाले कुशलैः कृतम्। पुष्पाद्युत्पादकं द्रव्यं दोहदं स्यात्तु तत्क्रियेति शब्दार्णवे। तस्य छद्मना व्याजेन। कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे इत्यमरः। अस्यास्तव सख्याः वदनमदिरां गण्डूषमद्यं काङ्क्षति मया सहेत्यत्रापि सम्बन्धनीयम्। अशोकवकुलयोः स्त्रीपादताडनगण्डूषमदिरे दोहदमिति प्रसिद्धिः। स्त्रीणां स्पर्शात् प्रियङ्गुर्वि

तन्मध्ये च स्फटिकफलका काञ्चनी वासयष्टि
र्मूले बद्धा मणिभिरनतिप्रौढवंशप्रकाशैः ।
तालैः शिञ्जावलयसुभगैर्नर्त्तितः कान्तया मे
यामध्यास्ते दिवसविगमे नीलकण्ठः सुहृद्वः ॥ १८

---

कसति वकुलः सीधुगण्डूषसेकात् पादाघातादशोक
स्तिलककुरवकौ वीक्षणालिङ्गनाभ्याम्। मन्दारो
नर्म्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवाताच्चूतोगी
तान्नमेरुर्विकसति च पुरोनर्त्तनात् कर्णिकारः ॥१७

तन्मध्य इति। किञ्चेति चार्थः। तन्मध्ये तयो
र्द्वयोर्मध्ये अनतिप्रौढ़ानामनतिकठोराणां वंशानां
प्रकाश इव प्रकाशो येषां तैस्तरुणवेणु सच्छायैर्म
णिभिर्मरकतशिलाभिः मूले बद्धा कृतवेदिकेत्यर्थः।
स्फटिकं स्फटिकमयं फलकं पीठं यस्याः सा काञ्च
नस्य विकारः काञ्चनी सौवर्णी वासयष्टिर्वासदण्डो
ऽस्तीति शेषः। शिञ्जा भूषणध्वनिः भूषणानान्तु
शिञ्जितमित्यमरः। भिदादित्वादङ्। शिञ्जिधातु
रयं तालव्यादिर्न तु दन्त्यादिः। शिञ्जाप्रधानानि
वलयानि तैः सुभगा रम्यास्तैस्तालैः करतलवादनै
र्मे मम कान्तया नर्त्तितो वो युष्माकं सुहृत् सखा
नीलकण्ठोमयूरः। मयूरो बर्हिणो बर्ही नीलक
ण्ठो भुजङ्गभुगित्यमरः। दिवसविगमे सायंका
ले यां यष्टिकामध्यास्ते यष्ट्यामास्त इत्यर्थः। अधि

एभिः साधो हृदयनिहितैर्लक्षणैर्लक्षयेथाः
द्वारोपान्ते लिखितवपुषौ शङ्खपद्मौ च दृष्ट्वा।
क्षामच्छायं भवनमधुना मद्वियोगेन नूनं
सूर्य्यापाये न खलु कमलं पुष्यति स्वामभिख्याम्॥१९॥

---

शीङ्स्थासां कर्म्मेति कर्म्मत्वात् द्वितीया। तत्रागार मित्यारभ्य पञ्चसु श्लोकेषु समृद्धवस्तुवर्णनादुदात्तालङ्कारः। तदुक्तम्। तदुदात्तं भवेद्यत्र समृद्धवस्तु वर्ण्यत इति॥ १८॥

एभिरिति। हे साधो निपुण। साधुः समर्थो निपुणोवेति काशिकायाम्। हृदयनिहितैरविस्मृतैरित्यर्थः। एभिः पूर्वोक्तैर्लक्षणैस्तोरणादिभिरभिज्ञानैः द्वारोपान्ते एकवचनमविवक्षितं द्वारप्रान्तयोरित्यर्थः। लिखिते वपुषी आकृती ययो स्तौ तयोक्तौ शङ्खपद्मौ नाम निधिविशेषौ। निधिर्ना शेवधिर्भेदाः पद्मशङ्खादयो निधेरित्यमरः। दृष्ट्वा च नूनं सत्यम् अधुनेदानीं मद्वियोगेन मम प्रवासेन क्षामच्छायम् उत्सवोपरमात् क्षीणकान्ति भवनं मद्गृहं लक्षयेथा निश्चिनुयाः। तथाहि सूर्य्यापाये सति कमलं पद्मं स्वामात्मीयामभिख्यां शोभाम्। अभिख्या नामशोभयोरित्यमरः। न पुष्यति नोपचिनोति खलु सूर्य्यविरहितं पद्ममिव पतिविरहितं गृहं न शोभत इत्यर्थः॥ १९॥

गत्वा सद्यः कलभतनुतां शीघ्रसम्पातहेतोः
क्रीड़ाशैले प्रथमकथिते रम्यसानौ निषस्यः ।
अर्हस्यन्तर्भवनपतितां कर्त्तुमल्पाल्पभासं
खद्योतालीविलसितनिभां विद्युदुन्मेषदृष्टिम् ॥ २० ॥

---

निजगृहनिश्चयानन्तरं कृत्यमाह

गत्वेति । हे मेघ शीघ्रसम्पात एव हेतुस्तस्य शीघ्रप्रवेशार्थमित्यर्थः । षष्ठी हेतुप्रयोग इति षष्ठी । सम्पातः पतिते योगे प्रवेशे वेदसम्विदे इति शब्दार्णवे । सद्यः सपदि कलभस्य करिपोतस्य तनुरिव तनुर्यस्य तस्य भावस्तामल्पशरीरतां गत्वा प्राप्य प्रथमकथिते तस्यास्तीर इत्यादिना पूर्वोद्दिष्टे रम्यसानौ निषीदनयोग्य इत्यर्थः । क्रीडाशैले निषस्यः उपविष्टः सन् अल्पाल्पा अल्पप्रकारा भाः प्रकाशो यस्यास्तां प्रकारे गुणवचनस्येति द्विरुक्तिः । खद्योतानामाली तस्या विलसितेन स्फुरितेन निभां समानां विद्युदुन्मेषो विद्युत्प्रकाशः स एव दृष्टिस्तां भवनस्यान्तरन्तर्भवनं तत्र पतितां प्रविष्टां कर्त्तुमर्हसि । यथा कश्चित् किञ्चिदन्विष्यन् क्वचिदुन्नते स्थित्वा शनैःशनैरतितरां द्राघीयसीं दृष्टिमिष्टदेशे पातयति तद्वदित्यर्थः ॥ २० ॥

सम्प्रति दृष्टिपातफलमभिज्ञानञ्च श्लोकद्वयेनाह

तन्वीति । तन्वी कृशाङ्गी । सत्त्वां कृशं तनु

तन्वी श्यामा शिखरिदशना पक्वबिम्बाधरोष्ठी
मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः।

---

रित्यमरः। वोतोगुणवचनादिति ङीष्। श्यामा युवतिः। श्यामा यौवनमध्यस्था इत्युत्पलमालायाम्। शिखराण्येषां सन्तीति शिखरिणः कोटिमन्तः। शिखरं शैलवृक्षाग्रकक्षापुलककोटिष्विति विश्वः। शिखरिणो दशना दन्ता यस्याः सा। एतेनास्याः भाग्यवत्त्वं पत्यायुष्करत्वञ्च सूच्यते तदुक्तं सामुद्रिके। स्निग्धाः समानरूपाः सुपङ्क्तयः शिखरिणः श्लिष्टाः। दन्ता भवन्ति यासां ताः शालयन्ति जगत्सर्व्वम्। ताम्बूलरसरक्तोऽपि स्फटभासः समोदयाः। दन्ताः शिखरिणो यस्या दीर्घं जीवति तत्प्रिय इति। पक्वं परिणतं बिम्बं बिम्बिकाफलमिवाधरोष्ठो यस्याः सा पक्वबिम्बाधरोष्ठी। शाकपार्थिवादित्वान्मध्यपदलोपिसमास इति वामनः। नासिकोदरोष्ठेत्यादिना ङीष्। मध्ये क्षामा कृशोदरीत्यर्थः। चकितहरिण्याः प्रेक्षणानीव प्रेक्षणानि दृष्टयो यस्याः सा तथोक्ता। एतेनास्याः पद्मिनीत्वं व्यज्यते। तदुक्तं रतिरहस्ये पद्मिनीलक्षणप्रस्तावे। चकितमृगदृशाभे प्रान्तरक्ते च नेत्रे इति। निम्ननाभिर्गम्भीरनाभिः। अनेन नारीणां नाभिगाम्भीर्य्यान्मदनातिरेक इति कामसूत्रार्थः सूच्यते। श्रोणीभारादलसगमना मन्द

श्रोणीभारादलसगमना स्तोकनम्रा स्तनाभ्यां
या तत्र स्याद्युवतिविषये सृष्टिराद्येव धातुः॥ २१॥
तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम्।

---

गामिनी न तु जघनदोषात्। स्तनाभ्यां स्तोकनम्रा ईषदवनता न तु वपुर्दोषात्। युवतय एव विषय स्तस्मिन् युवतिविषये युवतीरधिकृत्येत्यर्थः। धातुर्ब्रह्मण आद्या सृष्टिः प्रथमशिल्पमिव स्थितेत्युत्प्रेक्षा। प्रथमनिर्म्मिता युवतिरिवेत्यर्थः। प्रायेण शिल्पिनां प्रथम निर्म्माणे प्रयत्नातिशयवशाच्छिल्पनिर्म्माणसौष्ठवं दृश्यत इत्याद्यविशेषणम्। तथाचास्मिन् प्रपञ्चे न कुत्राप्येवंविधं रमणीयं रमणीरत्नेष्वस्तीति भावः। तदेवम्भूता या स्त्री तत्रान्तर्भवने स्यात् तामित्युत्तर श्लोकेन सम्बन्धः॥ २१॥

तामिति। सहचरे सहचारिणि अनेन वियोगासहिष्णुत्वं व्यज्यते मयि दूरीभूते दूरस्थिते सति सहचरे चक्रवाके दूरीभूते सति चक्रवाकीं चक्रवाकवधूमिव एकामेकाकिनीं स्थितां तां परिमितकथां मितभाषिणीं मे द्वितीयं जीवितं जानीयाः जीविततुल्यां मत्प्रेयसीमवगच्छेरित्यर्थः। तन्वीत्यादिपूर्व्वलक्षणैरिति शेषः। लक्षणानामन्यथाभावम्मसाशङ्क्याह गाढ़ेति। गाढ़ोत्कण्ठां प्रबलवि

गाढ़ोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम् ॥ २२ ॥

नूनं तस्याः प्रबलरुदितोच्छूननेत्रं प्रियायाः
निश्वासानामशिशिरतया भिन्नवर्णाधरोष्ठम् ।

रहवेदनाम् । रागे त्वलब्धविषये वेदना महती
तु या । संशोषणी तु गात्राणां तामुत्कण्ठां विदु
र्बुधा इत्यभिधानात् । बालां गुरुषु विरहमहत्सु एषु
दिवसेषु गच्छत्सु वर्त्तमानेषु शिशिरेण शिशिरका
लेन मथितां पद्मिनीं वा पद्मिनीमिव । इववद्वा यथा
शब्दा इति दण्डी । अन्यरूपां पूर्व्वविपरीताकारां
जातां मन्ये पद्मिनीवान्यादृशी जातेति तर्कयामी
त्यर्थः । एतावता नेयमन्येति भ्रमितव्यमिति भावः
॥ २२ ॥

नूनमिति । प्रबलरुदितेन उच्छूने उच्छ्वसिते
नेत्रे यस्य तत् । उच्छूनेति श्वयतेः कर्त्तरि क्तः आ
दितश्चेतिनिष्ठानत्वं वचीस्वपीत्यादिना सम्प्रसारणं
सम्प्रसारणाच्चेति पूर्व्वरूपत्वं हल इति दीर्घः ।
एतेन विषादो व्यज्यते निश्वासानामशिशिरतया
अन्तस्तापोष्णत्वेन भिन्नवर्णौ विच्छायोऽधरोष्ठो यस्य
तत् हस्तेन्यस्तं हस्तन्यस्तम् एतेन चिन्ता व्यज्यते ।
लम्बालकत्वात्संस्काराभावाल्लम्बमानकुन्तलत्वादस
कलव्यक्तिम् असम्पूर्णाभिव्यक्ति तस्याः प्रियायाः मुखं

हस्तन्यस्तं मुखमसकलव्यक्ति लम्बालकत्वा
दिन्दोर्दैन्यं त्वदनुसरणक्लिष्टकान्तेर्बिभर्त्ति ॥ २३ ॥
आलोके ते निपतति पुरा सा बलिव्याकुला वा
मत्सादृश्यं विरहतनु वा भावगम्यं लिखन्ती ।

---

त्वदनुसरणेन त्वदुपरोधेन मेघानुसरणेनेति यावत् । क्लिष्टकान्तेरिन्दोर्दैन्यं शोच्यतां बिभर्त्ति नूनमिति वितर्के । नूनं तर्केऽर्थनिश्चय इत्यमरः । पूर्ववत्तथापि न भ्रमितव्यमिति भावः ॥ २३ ॥

सर्वविरहिणीसाधारणानि लक्षणानि सम्भावनयोत्प्रेक्ष्याणीत्याह आलोक इत्यादिभिस्त्रिभिः ।

आलोक इति । हे मेघ सा मत्प्रिया बलिषु नित्येषु प्रोषितार्थेषु च देवताराधनेषु व्याकुला व्यापृता वा विरहेण तनु कृशं भावगम्यं मत्कायस्य दृष्टचरत्वात्स्मृति सम्भावनयोत्प्रेक्ष्यमित्यर्थः मत्सादृश्यं मदाकारसाम्यं मत्प्रतिकृतिमित्यर्थः । यद्यपि सादृश्यं नाम प्रसिद्धवस्त्वन्तरगतमाकारसाम्यं तथापि प्रतिकृतित्वेन विवक्षितम् इतरथालेख्यत्वासम्भवात् आलेख्येऽपि च सादृश्यमित्यभिधानात् । लिखन्ती क्वचित् फलकादौ विन्यस्यन्ती वा । चित्रदर्शनस्य विरहिणीविनोदोपायत्वादिति भावः । एतच्च कामशास्त्रसंवादेन सम्यग्विवेचितमस्माभीरघुवंशसञ्जीवन्याम् सादृश्यप्रतिकृतिदर्शनैः प्रियायाः इत्यत्र । स

पृच्छन्ती वा मधुरवचनां सारिकां पञ्जरस्थां
कच्चिद्भर्तुः स्मरसि रसिके त्वं हि तस्य प्रियेति ॥२४॥
उत्सङ्गे वा मलिनवसने सौम्य निक्षिप्य वीणां
मद्गोत्राङ्कं विरचितपदं गेयमुद्गातुकामा ।

धुरवचनां मञ्जुभाषिणीम् अतएव पञ्जरस्थां हिं
प्य कृतसंरक्षणामित्यर्थः सारिकां स्वोपक्षिविशेषं
ऽे रसिके भर्तुः स्वामिनः स्मरसि कच्चित् स्मरसि
कम् । कच्चित्कामप्रवेदने इत्यमरः । भर्त्तारं स्म
रसि किमित्यर्थः । अधीगर्थदयेशां कर्म्मणीति
कर्म्मणि षष्ठी । स्मरणे कारणमाह हि यस्मात्
कारणात् त्वं तस्य भर्त्तुः प्रीणातीति प्रिया । इगुप
धज्ञा प्रीकिर इति कप्रत्ययः । अतः प्रेमास्पदत्वात्
स्मर्त्तुमर्हसीति भावः । इत्येवं पृच्छन्ती वा । वाश
ब्दो विकल्पे । उपमायां विकल्पे वेत्यमरः । ते
तवालोके दृष्टिपथे पुरा निपतति सद्यो निपतिष्य
तीत्यर्थः । स्यात् प्रवन्धे पुरातीते निकटागामिके
पुरेत्यमरः । यावत् पुरानिपातयोर्लडिति लट्
॥ २४ ॥

उत्सङ्ग इति । हे सौम्य साधो मलिनवसने ।
प्रोषिते मलिना कृशेति शास्त्रादित्यर्थः । उत्सङ्गे क
रो वीणां निक्षिप्य मम गोत्रं नाम अङ्कश्चिह्नं यस्मिं
स्तत् मद्गोत्राङ्कं मन्नकाङ्कं यथा तथा । गोत्रन्तु नाम्नि

तन्त्रीमार्द्रां नयनसलिलैः सारयित्वा कथञ्चिद्
भूयोभूयः स्वयमपि कृतां मूर्च्छनां विस्मरन्ती ॥ २५ ॥
शेषान्मासान् विरहदिवसस्थापितस्यावधेर्वा
विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः ।

---

त्यमरः । विरचितानि पदानि यस्य तत्तथोक्तं गेयं गानार्हं प्रबन्धादि गीतमिति पाठे सएवार्थः । उद्गातुमुच्चैर्गातुं कामो यस्याः सा । तुम् काममनसो रिति मकारलोपः । देवयोनित्वाद्गान्धारग्रामं गातु कामेत्यर्थः । तदुक्तं षड्जमध्यमनामानौ ग्रामौ गाय न्ति मानवाः । नतु गान्धारनामानं स लभ्यो देवयो निभिरिति । तथा नयनसलिलैः प्रियतमस्मृतिज नितैरश्रुभिरार्द्रां तन्त्रीं कथञ्चित् कृच्छ्रेण सार यित्वा चार्द्रत्वात्करेण प्रमृज्य अन्यथा क्वणनासम्भ वादिति भावः । भूयोभूयः पुनः पुनः स्वयमात्मना कृतामपि विस्मरणानर्हामपीत्यर्थः मूर्च्छनां स्वरा रोहावरोहक्रमम् । स्वराणां स्थापनाः सान्ताः मूर्च्छ नाः सप्त सप्त हीति सङ्गीतरत्नाकरे । विस्मरन्ती वा । आलोके ते निपततीति पूर्वेणान्वयः ॥ २५ ॥

शेषानिति । विरहस्य दिवसस्तस्मात् स्थापि तस्य तत आरभ्य निश्चितस्यावधेरन्तस्य शेषान् गत शिष्टान्मासान् देहलीदत्तपुष्पैः देहली द्वारशाखाधा रदारु । गृहावग्रहणी देहलीत्यमरः । तत्र दत्तानि

मत्सङ्गं वा हृदयनिहितारम्भमास्वादयन्ती
प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः ॥ २६ ॥

कुलकम्।

स्निग्धाः सख्यः क्षणमपि दिवा तां न मोक्ष्यन्ति तन्वी
मेकप्रख्या भवति हि जगत्यङ्गनानां प्रवृत्तिः ।
स त्वं रात्रौ जलद शयनासन्नवातायनस्थः
कान्तां सुप्ते सति परिजने वीतनिद्रामुपेयाः ॥ ० ॥

---

राशीकृतत्वेन निहितानि यानि पुष्पाणि तैर्गणनया एकोद्वावित्यादिसंख्यानेन भुवि भूतले विन्यस्यन्ती वा पुष्पविन्यासैर्मासान् गणयन्तीवेत्यर्थः। हृदये निहितो मनसि सङ्कल्पितः आरम्भ उपक्रमो यस्य तम् अथवा हृदयनिहिता आरम्भाश्चुम्बनादयो व्यापारा यस्मिंस्तं मत्सङ्गं मत्सम्भोगरतिमास्वादयन्ती वा। आलोके ते इतिपूर्व्वेण सम्बन्धः। ननु कथ मयं निश्चय इत्याशङ्कामर्थान्तरन्यासेन परिहरति प्रायेण बाहुल्येन अङ्गनानां रमणविरहेष्वेते पर्वोक्ताः विनोदाः कालयापनोपायाः। एतेन सङ्कल्पावस्था उक्ता तदुक्तम्। सङ्कल्पो नाय विषये मनो रथ उदाहृत इति। त्रिभिः कुलकम् ॥ २६ ॥

सव्यापारामिति। हे सखे अहनि दिवसे सव्यापारां पूर्वोक्तवलिचित्रलेखनादिव्यापारवतीं ते सखीं स्वप्रियां मद्वियोगो मद्विरहस्तथा तेन प्रकारेण।

सव्यापारामहनि न तथा पीड़येन्मद्वियोगः
शङ्के रात्रौ गुरुतरशुचं निर्विनोदां सखीं ते।
मत्सन्देशैः सुखयितुमलं पश्य साध्वीं निशीथे
तामुन्निद्रामवनिशयनां सौधवातायनस्थः॥ २७॥
आधिक्षामां विरहशयने सन्निषण्णैकपार्श्वां
प्राचीमूले तनुमिव कलामात्रशेषां हिमांशोः।

---

प्रकारे गुणवचनस्येति शाच्प्रत्ययः। न पीडयेत् यथा रात्राविति शेषः। किन्तु रात्रौ निर्विनोदां निर्व्यापारां ते सखीं गुरुतरा शुक् यस्यास्तां गुरुतरशुचमतिदुःखां शङ्के तर्कयामि। शङ्का वितर्कभययोरिति शब्दार्णवे। अतो निशीथेऽर्द्धरात्रे उन्निद्रामुत्सृष्टनिद्राम् अवनिरेव शयनं शय्या यस्यास्तां नियमार्थं स्थण्डिलशायिनीं साध्वीं पतिव्रताम्। साध्वी पतिव्रतेत्यमरः। अतो नान्यथा शङ्कितव्यमिति भावः। तां त्वत्सखीं मत्सन्देशैर्मद्वार्त्ताभिः अलंपर्य्याप्तं सुखयितुमानन्दयितुं सौधवातायनस्थः सन् पश्य। सखा शाली च पितरौ चित्रदूतशुकादयः। सुखयन्तीष्टकथनसुखोपायैर्वियोगिनोमिति रत्नाकरे। दूतस्यायं मेघ इति भावः। अनेन जागरावस्थोक्ता॥ २७॥

पुनस्तामेव विशिनष्टि चाधिक्षामामिति चतुर्भिः

आधीति। आधिना मनोव्यथया क्षामां कृशाम्।

नीता रात्रिः क्षण इव मया सार्द्धमिच्छारतैर्या
तामेवोष्णैर्विरहमहतीमश्रुभिर्यापयन्तीम् ॥ २८ ॥
पादानिन्दोरमृतशिशिरान् जालमार्गप्रविष्टान्
पूर्व्वप्रीत्या गतमभिमुखं सन्निवृत्तं तथैव ।

---

पुंस्याधिर्मानसी व्यथेत्यमरः । क्षायतेः कर्त्तरि क्तः । क्षायोम इति निष्ठा तकारस्य मकारः । विरहे शयनं तस्मिन् विरहशयने पल्लवादिरचित इत्यर्थः सन्निषणमेकं पार्श्वं यस्यास्तां प्राच्याः पूर्व्वस्यादिशो मूले उदयप्रान्ते इत्यर्थः । प्राचीग्रहणं क्षीणावस्याद्योतनार्थम् । कलामात्रं कलैव शेषोयस्यास्तां हिमांशोः तनुं मूर्त्तिमिव स्थिताम् । तथा या रात्रिर्मया सार्द्धमिच्छया कृतानि रतानि तैः । शाकपार्थिवादित्वान्मध्यमपदलोपि समासः । क्षण इव नीता यापिता तामेव रात्रिं विरहेण महतीं महत्त्वेन प्रतीयमानाम् उष्णैरश्रुभिर्यापयन्तीम् । यातेर्ण्यन्ताच्छृटप्रत्ययः । अर्त्तिह्रीत्यादिना पुगागमः । स एव कालः सुखिनामल्पः प्रतीयते दुःखिनान्तु विपरीत इति भावः । एतेन कार्श्यावस्थोक्ता ॥ २८ ॥

पादानिति । जालमार्गप्रविष्टान् गवाक्षविवरगतान् अमृतशिशिरान् इन्दोः पादान् रश्मीन् पूर्व्वप्रीत्या पूर्वस्नेहेन पूर्ववदानन्दकराभविष्यन्तीति बुद्ध्येति भावः । अभिमुखं यथातथा गतं तथैव

चक्षुः खेदात्सलिलगुरुभिः पक्ष्मभिश्छादयन्तीं
साभ्रेऽह्नीव स्थलकमलिनीं न प्रबुद्धां न सुप्ताम् ॥२९॥

अन्वेष्टव्यामवनिशयने सन्निकीर्णैकपार्श्वां
तत्पर्यङ्कप्रगलितलवैश्छिन्नहारैरिवास्रैः ।
भूयो भूयः कठिनविषमां सारयन्तीं कपोला-
दामोक्तव्यामयमितनखेनैकवेणीं करेण ॥३०॥

निश्वासेनाधरकिशलयक्लेशिना विक्षिपन्तीं
शुद्धस्नानात् परुषमलकं नूनमागण्डलम्बम् ।

---

सन्निवृत्तं तदा तेषामतीव दुःसहत्वादिति भावः । चक्षुर्दृष्टिः खेदात् सलिलगुरुभिरश्रुदुर्भरैः पक्ष्मभिः छादयन्तीम् अतएव साभ्रे दुर्दिनेऽह्नि दिवसे न प्रबुद्धां मेघावरणादविकसितां न सुप्तामसुकुलितां उभयत्रापि नञर्थस्य न शब्दस्य सुप्सुपेति समासः । स्थलकमलिनीमिव स्थिताम् । एतेन विषयद्वेषः षष्ठी दशा सूचिता ॥ २९ ॥

निश्वासेनेति । शुद्धस्नानात्तैलादिरहितस्नानात् परुषं कठिनस्पर्शं नूनम् आगण्डलम्बम् । सुप्सुपेति समासः । अलकं चूर्णकुन्तलान् । जातावेकवचनम् । अधरकिसलयं क्लेशयति क्लिश्नातीति वा तेन तथोक्तेन उष्णेनेत्यर्थः । ताच्छील्ये णिनिः । निश्वासेन विक्षिपन्तीं चालयन्तीं तथा स्वप्नजोऽपि स्वप्नावस्थाजन्योऽपि साक्षात्सम्भोगासम्भवादिति

मत्सम्भोगः कथमुपनयेत् स्वप्नजोऽपीति निद्रा
माकांक्षन्तीं नयनसलिलोत्पीडरुद्धावकाशाम् ॥३०॥
आद्ये बद्धा विरहदिवसे या शिखा दाम हित्वा
शापस्यान्ते विगलितशुचा तां मयोद्वेष्टनीयाम्।
स्पर्शक्लिष्टामयमितनखेनासकृत्सारयन्तीं
गण्डाभोगात्कठिनविषमामेकवेणीं करेण ॥ ३१ ॥

---

भावः। मत्सम्भोगः कथं केन प्रकारेणोपनयेदाग
च्छेदित्याशयेनेति शेषः। प्रार्थनायां लिङ्। इति
नयनसलिलोत्पीडेनाश्रुप्रवृत्त्या रुद्धावकाशामाक्रा
न्तावस्थानां दुर्लभामित्यर्थः निद्रामाकाङ्क्षन्तीं स्नेहा
तुरत्वादिति भावः। अत्राश्रुविसर्ज्जनेन लज्जा
त्यागो व्यज्यते ॥ ३० ॥

आद्य इति। आद्ये विरहदिवसे दाम मालां
हित्वा त्यक्त्वा या शिखा बद्धा ग्रथिता शापस्यान्ते
विगलितशुचा वीतशोकेन मयोद्वेष्टनीयां मोचनीयां
स्पर्शक्लिष्टां स्पर्शे सति मूलकेशेषु सव्यथामित्यर्थः।
कठिना चासौ विषमा च ताम्। खञ्जकुब्जादिव
दन्यतरस्य प्राधान्यविवक्षया विशेषणं विशेष्येण
वञ्ज्जमिति समासः। एकवेणीमेकीभूतवेणीम्।
पूर्वकालेत्यादिना तत्पुरुषः। तां शिखाम् अय
मिता नखा यस्य तेन करेण गण्डाभोगात् कपोल
विस्तारादसकृन्मुहुर्मुहुः सारयन्तीम् अपसारय

सा सन्नयस्ताभरणमबला पेशलं धारयन्ती
शय्योत्सङ्गे निहितमसकृद्दुःखदुःखेन गात्रम्।
त्वामप्यस्रं नवजलमयं मोचयिष्यत्यवश्यं
प्रायः सर्वोभवति करुणावृत्तिरार्द्रान्तरात्मा ॥ ३२॥
जाने सख्यास्तव मयि मनः सम्भृतस्नेहमस्मा
दित्यम्भूतां प्रथमविरहे तामहं तर्कयामि।

---

न्तीम्। तां पश्येति पूर्वेण सम्बन्धः। असकृत्त्वा रणाच्चित्तविभ्रमदशा सूचिता॥ ३१॥

सेति। अबला दुर्बला संन्यस्ताभरणं कृश त्वात्परित्यक्ताभरणम् असकृदनेकशो दुःखदुःखेन दुःखप्रकारेण। प्रकारे गुणवचनस्येति द्विर्भावः। शय्योत्सङ्गे निहितं पेशलं मृदुलं गात्रं शरीरं धारयन्ती वहन्ती। अनेनात्यन्ताशक्तया मूर्च्छा वस्था सूच्यते। सा त्वत्सखी त्वामपि नवजलमयं नवाम्बुरूपमस्रं वाष्पम् अवश्यं सर्वथा मोचयिष्यति। पचादित्वाद्द्विकर्म्मकत्वम्। तथाहि प्रायः प्रायेणार्द्रान्तरात्मा मृदुहृदयः मेघस्तु द्रवान्तःशरीरः। सर्वः करुणा करुणमयी वृत्तिरन्तःकरणवृत्तिर्य्यस्य सः करुणार्द्रवृत्तिर्भवति॥ ३२॥

नन्वीदृशीं दशामापन्नेति कथं त्वया निश्चितमत आह

जाने इति। हे मेघ तव सख्यामनो मयि सम्भृतस्नेहं सञ्चितानुरागं जाने अस्मात् स्नेहात्

वाचालं मां न खलु सुभगम्मन्यभावः करोति
प्रत्यक्षन्ते निखिलमचिरात् भ्रातरुक्तं मया यत् ॥३३॥
रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्यं
प्रत्यादेशादपि च मधुनोविस्मृतभ्रूविलासम्।

नकारणात् प्रथमविरहे। प्रथमग्रहणं दुःखाति शयार्थम्। तां त्वत्सखीमित्थम्भूतां पूर्वोक्तावस्थया भूतां तर्कयामि। ननु सुभगमानिनामेष स्वभावो यदात्मनि स्त्रीणामनुरागप्रकटनं तत्राह वाचाल मिति। सुभगमात्मानं मन्यत इति सुभगम्मन्यः। आत्ममाने खश् चेति खश्प्रत्ययः। अरुर्द्विषदि त्यादिना मुमागमः। तस्य भावः सुभगम्मन्यभावः सुभगमानित्वं मां वाचाल बहुभाषिणं न करोति खलु सौन्दर्य्याभिमानितां न प्रकटयामीत्यर्थः। स्या ज्जल्पकस्तु वाचलोवाचाटोबहुगर्ह्यवागित्यमरः। आलजाटचौ बहुभाषिणीत्यालच्प्रत्ययः। किन्तु हे भ्रातर्मयोक्तं यदाधिक्षामामित्यादि तदखिलं सर्व्वमचिरात् शीघ्रमेव ते तव प्रत्यक्षं भविष्यतीति शेषः॥ ३३॥

रुद्धेति। अलकैरुद्धा अपाङ्गयोः प्रसरायस्य तत्तथोक्तम् अञ्जन स्नेहशून्यं स्निग्धाञ्जनरहितम् अपि च मधुनोमद्यस्य प्रत्यादेशान्निराकरणात् परित्यागादित्यर्थः। प्रत्यादेशो निराकृतिरित्यमरः।

त्वय्यासन्ने नयनमुपरिस्पन्दि शङ्के मृगाक्ष्याः
मीनक्षोभाच्चलकुवलयश्रीतुलामेष्यतीति ॥ ३४ ॥
वामश्चास्याः कररुहपदैर्मुच्यमानो मदीयै-
र्मुक्ताजालं चिरपरिचितं त्याजितो दैवगत्या ।

---

विस्मृतो भ्रूविलासो भ्रूभङ्गी येन तत् । नयनस्य रुद्धापाङ्गप्रसरत्वादिकं विरहसमुत्पन्नमिति भावः । त्वय्यासन्ने सति स्वकुशलवार्त्ताशंसिनीति शेषः । उपर्य्यूर्द्ध्वभागे स्पन्दते स्फुरतीत्युपरिस्पन्दि । तथाच निमित्तनिदाने । स्पन्दान्मूर्ध्नि क्षत्रलाभं ललाटे पट्टसंशुकम् । इष्टप्राप्तिं दृशोरूर्ध्वमपाङ्गे हानि मादिशेदिति । मृगाक्ष्यास्तत सख्याः नयनं वाम मिति शेषः । वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिणः। दाने देवादिपूजायां स्पन्देऽलङ्करणेपि चेति स्त्रीणां वामभागप्राशस्त्यात्। मीनक्षोभात मीनचल नाच्चलस्य कुवलयस्य श्रियाः शोभायाः तुलां साद्द श्यमेष्यतीति शङ्के तर्कयामि ॥ ३४ ॥

वाम इति । मदीयैः कररुहपदैर्नखपदैः । पुनर्भवःकररुहोनखोऽस्त्री नखरोऽस्त्रियामित्यमरः। मुच्यमानः परिहीयमाणः नखाङ्कररहित इत्यर्थः । चिरपरिचितं चिराभ्यस्तं मुक्ताजालं मौक्तिकस रमयं कटिभूषणं दैवगत्या दैववशेन त्याजितः । सम्प्रति नखपदोपभावेन शीतोपचारस्य तस्य वैय

सम्भोगान्ते मम समुचितो हस्तसंवाहनानां
यास्यत्यूरुः सरसकदलीस्तम्भगौरश्चलत्वम् ॥ ३५ ॥
तस्मिन् काले जलद यदि सा लब्धनिद्रासुखा स्या-
दन्वास्यैनां स्तनितविमुखो याममात्रं सहस्व।

ष्यादिति भावः। त्यजतेर्ण्यन्तात् कर्म्मकर्त्तरि क्तः। पचादित्वात् द्विकर्म्मकत्वम्। सम्भोगान्ते मम हस्तसंवाहनानां हस्तेन मर्द्दनानाम्। संवाहनं मर्द्दनं स्यादित्यमरः। समुचितोयोग्यः सरसो रसार्द्रः परिपक्वो न शुष्कश्च विवक्षितः तत्रैव पाण्डिमसम्भवात्। स चासौ कदलीस्तम्भश्च स इव गौरः पाण्डुरः। गौरः करीरे सिद्धार्थे शुक्ले पीतेऽरुणेपि चेति मालतीमालायाम्। अस्याः प्रियायाः वाम ऊरुश्चलत्वं स्पन्दनं यास्यति प्राप्स्यते। ऊरोः स्पन्दाद्रतिं विन्द्यादूर्वोः प्राप्तिं सुवाससः इति निमित्त निदाने ॥ ३५ ॥

तस्मिन्निति। हे जलद तस्मिन् काले त्वदुपसर्पणकाले सा मत्प्रिया लब्धं निद्रासुखं यया तादृशी स्याद्यदि स्याच्चेत एनां निद्राणामन्वास्य पश्चादासित्वेत्यर्थः। उपसर्गवशात्सकर्म्मकत्वम्। स्तनितविमुखोगर्ज्जितपराङ्मुखोनिःशब्दः सन् अन्यथा निद्राभङ्गः स्यादिति भावः। याममात्रं प्रहरमात्रम्। द्वौ यामप्रहरौ समावित्यमरः। सहस्व

मामूदस्याः प्रणयिनि मयि स्वप्नलब्धे कथञ्चित्
सद्यः कण्ठच्युतभुजलताग्रन्थि गाढ़ोपगूढ़म् ॥ ३६ ॥
तामुत्थाप्य स्वजलकणिकाशीतलेनानिलेन
प्रत्याश्वस्तां सममभिनवैर्जालकैर्मालतीनाम् ।

---

प्रतीक्षस्व । प्रार्थनायां लोट् । शक्तयोरेकवार सुरतस्य यामावधिकत्वात् स्वप्नेऽपि तथा भवितव्य मित्यभिप्रायः । तथाच रतिसर्वस्वे । एकवारा वधिर्यामो रतस्य परमोमतः । चन्द्रशक्तिमतोर्यू नोरद्भुतक्रमवर्त्तिनोरिति । यामसहनस्य प्रयोज नमाह मा भूदिति । अस्याः प्रियायाः प्रणयिनि प्रेयसि मयि कथञ्चित् कृच्छ्रेण स्वप्नलब्धे सति गा ढ़ोपगूढ़ं गाढ़ालिङ्गनम् । नपुंसके भावे क्तः । सद्यस्तत्क्षणं कण्ठात् च्युतः भुजलतयोर्ग्रन्थिर्बन्धो यस्य तन्माभूत् मास्तु कथञ्चिल्लब्धाहिङ्गनस्य वि घातो मा भूदित्यर्थः । नचात्र निद्रोक्तिस्तामुन्नि द्रामिति पूर्व्वोक्तेन विरुध्यते पुनः सप्तम्याद्यवस्थासु पाक्षिकनिद्रासम्भवात् । तथा च रसरत्नाकरे । आसक्तौ रोदनं निद्रा निर्लज्जानर्थवाग्भ्रमः । सप्त मादिषु जायन्ते दशाभेदेषु वासुके इति ॥ ३६ ॥

तामिति । तां प्रियां स्वस्य जलकणिकाभिर्जल विन्दुभिः शीतलेनानिलेनोत्थाप्य प्रबोध्य । एतेन तस्याः प्रभुत्वाद्राजनानिलसमाधिर्व्यज्यते । यथाह

विद्युद्गर्भः स्तिमितनयनां त्वत्सनाथे गवाक्षे
वक्तुं धीरः स्तनितवचनैर्मानिनीं प्रक्रमेथाः ॥ ३७ ॥

भोजराजः। मृदुभिर्मर्दनैः पादे शीतलैर्व्यजनैः स्तनौ। श्रुतौ च मधुरैर्गीतैर्निद्रातोबोधयेत् प्रभुमिति। अभिनवैर्मालतीनां जालकैः समं जातीमुकुलैः सह। सुमनामालती जातिरिति। साकं सत्रासमं सहेति। क्षार को जालकं क्लीबे कलिका कोरकः पुमानिति चामरः। प्रत्याश्वस्तां सुस्थिताम्। अन्यत्र पुनरुच्छ्वसिताम्। श्वसेः कर्त्तरि क्तः। एतेनास्याः सौकुमार्य्यं गम्यते। त्वत्सनाथे त्वत्सहिते। गवाक्षे स्तिमितनयनां कोऽसाविति विस्मयान्निश्चलनेत्रां मानिनीं मनस्विनीं जनानौचित्यासहिष्णुमित्यर्थः। विद्युत् गर्भो अन्तःस्था यस्य स विद्युद्गर्भः अन्तर्लीनविद्युत्क इत्यर्थः। गर्भोपवरकेऽन्तःस्थे गर्भोऽग्नौ कुक्षिगोऽर्भके इति शब्दार्णवः। दृष्टिप्रतिघातेन वक्तुर्मुखावलोकनप्रतिबन्धकत्वान्न विद्युता द्योतितव्यमिति भावः। धीरो धैर्य्यविशिष्टश्च सन् अन्यथाशीलत्वादिनैतदनाश्वासनप्रसङ्गादिति भावः। स्तनितवचनैः स्तनितान्येव वचनानि तैर्वक्तुं प्रक्रमेथा उपक्रमस्व। विध्यर्थे लिङ्। प्रोपाभ्यामित्यात्मनेपदम्॥ ३७॥

सम्प्रति दूतस्य श्रोतृजनाभिमुखीकरणचातुरीमुपदिशति

भर्त्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं
तत्सन्देशैर्हृदयनिहितैरागतं त्वत्समीपम् ।
यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ॥ ३८॥
इत्याख्याते पवनतनयं मैथिलीवोन्मुखी सा
त्वामुत्कण्ठोच्छ्वसितहृदया वीक्ष्य सम्भाव्य चैवम् ।

---

भर्त्तुरिति। विधवा गतभर्तृका न भवतीति अविधवा सभर्तृका हे अविधवे। अनेन भर्तृजीवन सूचनादनिष्टाशङ्कां वारयति। मां तव भर्त्तुः प्रियं मित्रं प्रियसुहृदं तत्रापि हृदयनिहितैर्मनसि स्थापितैस्तत्सन्देशैस्तस्य भर्त्तुः सन्देशैस्त्वत्समीपमागतं भर्त्तुः सन्देशकथनार्थमागतमित्यर्थः। अम्बुवाहं मेघं विद्धि जानीहि। न केवलमहं वार्त्ताहरः किन्तु घटकोऽपीत्याशयेनाह योऽम्बुवाहोमन्द्रस्निग्धैः स्निग्धगम्भीरैः ध्वनिभिः करणैः अबलानां स्त्रीणां वेणयस्तासां मोक्षे मोचने उत्सुकानि पथि श्राम्यतां श्रान्तिमापन्नानां प्रोषितानां प्रवासिनां पान्थानामित्यर्थः वृन्दानि सङ्घान् त्वरयति। पान्थोपकारिणो मे किमु वक्तव्यं सुहृदुपकारित्वमिति भावः॥ ३८॥

भर्तृसख्यादिज्ञापनस्य फलमाह

इतीति। इत्येवमाख्याते पवनतनयं हनूमन्तं मैथिली सीतेव सा मत्प्रिया उन्मुखी उत्कण्ठया

श्रोष्यत्यस्मात्परमवहिता सौम्य सीमन्तिनीनां
कान्तोदन्तः सुहृदुपनतः सङ्गमात्किञ्चिदूनः ॥ ३८ ॥

तामायुष्मन्मम च वचनादात्मनश्चोपकर्त्तुं
ब्रूयादेवं तव सहचरो रामगिर्य्याश्रमस्थः ।

---

औत्सुक्येन उच्छ्वसितहृदया विकसितचित्ता च सती त्वां वीक्ष्य सम्भाव्य सत्कृत्य अस्मात् भर्तृमैत्री ज्ञापनात्परं सर्व्वं श्रोतव्यम् अवहिता अप्रमत्ता सती श्रोष्यति च। अत्र सीताहनूमदुपाख्यानादस्याः पातिव्रत्यं मेघस्य दूतगुणसम्पत्तिश्च व्यज्यते। तदुक्तं रत्नाकरे। ब्रह्मचारी बली धीरो मायावी मानवर्ज्जितः। धीमानुदारो निःशङ्को वक्ता दूतः स्त्रियां भवेदिति। ननु वार्त्तामात्रश्रवणादस्याः को लाभ इत्याशङ्क्यार्थान्तरमुपन्यस्यति। हे सौम्य साधो सीमन्तिनीनां वधूनाम्। नारी सीमन्तिनी वधूरित्यमरः। सुहृदा सुहृन्मुखेनोपनतः प्राप्तः। सुहृत्पदं विप्रलम्भशङ्कानिवारनार्थम्। कान्तस्योदन्तो वार्त्ता कान्तोदन्तः। वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादित्यमरः। सङ्गमात् कान्तसम्पर्कात् किञ्चिदूनः ईषदूनः तद्वदेवानन्दकारीत्यर्थः ॥ ३८ ॥

सम्प्रति सन्दिशति

तामिति। हे आयुष्मन् प्रशंसायां मतुप्। परोपकारश्लाघ्यजीवितेत्यर्थः। मम वचनं प्रार्थनाव

अव्यापन्नः कुशलमबले पृच्छति त्वां वियुक्तः
पूर्व्वाभाष्यं सुलभविपदां प्राणिनामेतदेव ॥४०॥
अङ्गेनाङ्गं प्रतनु तनुना गाढ़तप्तेन तप्तं
सास्रेणाश्रुद्रुतमविरतोत्कण्ठमुत्कण्ठितेन ।

---

चनं तस्माच्च आत्मनः स्वस्योपकर्त्तुञ्च परोपकारेणात्मानं कृतार्थयितुमित्यर्थः । उपकारक्रियां प्रति कर्मत्वेपि तस्यानुकरोतीत्यादिवत्सम्बन्धमात्रविवक्षयामात्मन इति षष्ठी न विरुध्यते । यथाह भारविः । सा लक्ष्मीरुपकुरुते यया परेषामिति । तथा श्रीहर्षश्च । साधूनामुपकर्त्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुमिति । तां प्रियामेवं ब्रूयात् भवानिति शेषः । किमित्याह हे अबले तव सहचरो भर्त्ता रामगिरेश्चित्रकूटस्याश्रमेषु तिष्ठतीति रामगिर्य्याश्रमस्थः सन्नव्यापन्नः न मृतः । अमरणे हेतुमाह वियुक्तोवियोगं प्राप्तो दुःखी सन् त्वां कुशलं पृच्छति । दुह्यादित्वात् पृच्छतेर्द्विकर्मकत्वम् । तथाहि सुलभविपदामयत्नसिद्धविपत्तीनां प्राणिनाम् एतदेव कुशलमेव पूर्व्वाभाष्यम् एतदेव प्रथममवश्यं प्रष्टव्यम् । कृत्याश्चेत्यावश्यकार्थे ण्यत्प्रत्ययः ॥ ४० ॥

अङ्गेनेति । किञ्च दूरवर्त्ती दूरस्थः । नत्वागन्तुं शक्यतइत्याह वैरिणा विरोधिना विधिना दैवेन

उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्त्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः ॥ ४१ ॥
शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्
कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात् ।

---

रुद्धमार्गः प्रतिबद्धवर्त्मा स ते सहचरः तनुना कृ
शेन गाढतप्तेनात्यन्तसन्तप्तेन सास्रेण साश्रुणा उत्क
ण्ठा वेदना अस्य जाता उत्कण्ठितः तेनोत्कण्ठि
तेन । तदस्य सञ्जातमित्यादिना इतच्प्रत्ययः ।
उत्कण्ठतेर्वा कर्त्तरि क्तः । समधिकतरमधिकमु
च्छ्वसितीति समधिकरोच्छ्वासी तेन दीर्घनिश्वासि
नेत्यर्थः । अङ्गेन स्वशरीरेण प्रतनु कृशं तप्तं सन्त
प्तमस्रद्रुतमश्रुक्लिन्नम् । अस्रु नेत्राम्बुरोदनञ्चा
श्रमस्रु चेत्यमरः । अविरतोत्कण्ठमविच्छिन्नवे
दनम् उष्णोच्छ्वासं तीव्रनिश्वासम् । तिग्मं तीव्रं
खरं तीक्ष्णं चण्डमुष्णं समं स्मृतमिति हलायुधः ।
अङ्गं त्वदीयं तैः स्वसंवेद्यैः सङ्कल्पैर्मनोरथैर्विशत्ये
कीभवतीत्यर्थः । अत्र समरागित्वद्योतनाय नाय
केन नायिकायाः समानावस्थत्वमुक्तम् ॥ ४१ ॥
सम्प्रति स्वावस्थानिवेदनाय प्रस्तौति
शब्दाख्येयमिति । हे अबले यस्ते प्रियः सखीनां
पुरस्तादग्रे आननस्पर्शे त्वन्मुखसम्पर्के लोभात् श
ब्दाख्येयं शब्देन रवेणाख्येयम् उच्चैर्वाच्यमपि यत्

सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट
स्त्वामुत्कण्ठाविरचितपदं मन्मुखेनेदमाह ॥ ४२ ॥
श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं
वक्त्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान् ।

---

तद्वचनमपीति शेषः । कर्णे कथयितुं लोलो लाल सोऽभूत् किल । लोलुपो लोलभो लोलो लालसो लम्पटोऽपि चेति यादवः । श्रवणविषयं कर्णपथम् अतिक्रान्तः तथा लोचनाभ्यामदृष्टः । अतिदूरत्वात् द्रष्टुं श्रोतुञ्च न शक्य इति भावः । स ते प्रियः त्वाम् उत्कण्ठया विरचितानि पदानि सुप्तिङन्त शब्दाः वाक्यानि वा यस्य तत्तथोक्तम् । पदं शब्दे च वाक्ये चेति विश्वः । इदं वक्ष्यमाणं मन्मुखेनाह मन्मुखेन स एव ब्रूते इत्यर्थः ॥ ४२ ॥

सादृश्यप्रतिकृतिस्वप्नदर्शनतदङ्गस्पृष्टस्पर्शाख्यानि चत्वारि विरहिणां विनोदस्थानानि तथाचोक्तं पताकायाम् । वियोगावस्थासु प्रियजनसदृशानु भवनं ततश्चित्रं कर्म्म स्वपनसमये दर्शनमपि । तदङ्ग स्पृष्टानामुपनतवतां दर्शनमपि प्रतीकारोऽनङ्गव्य थितमनसां कोऽपि गदित इति । तत्र सदृशवस्तु दर्शनमाह ।

श्यामास्विति । श्यामासु प्रियङ्गुलतासु । श्यामा तु महिलाहया लता गोवन्दनी गुन्द्रा प्रियङ्गुः

उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्
हन्तैकस्मिन् क्वचिदपि न ते चण्डि सादृश्यमस्ति ॥ ४३ ॥

---

फलिनी फलोत्यमरः । अङ्गं शरीरमुत्पश्यामि सौकुमार्यादिसाम्यादङ्गमिति तर्कयामीत्यर्थः । तथा चकितहरिणीनां प्रेक्षणे दृष्टिपातं शशिनि चन्द्रे वक्त्रच्छायां मुखकान्तिं तथा शिखिनां बर्हिणां बर्हभारेषु बर्हसमूहेषु केशान् प्रतनुषु स्वल्पासु नदीनां वीचिषु । अत्र वीचीनां विशेषणोपादानेन नानुक्तगुणग्रहो दोषः भ्रूसाम्यनिर्वाहाय महत्त्वदोषनिराकरणार्थत्वात्तस्येति । तदुक्तं रसरत्नाकरे । नानुत्पादे गुणोत्कर्षे भोगोक्तौ दोषवारणे । विशेषणादिदोषस्य नास्त्यनुक्तगुणग्रह इति । भ्रूविलासान् । भ्रूपताका इति पाठे भ्रुवः पताका इवेत्युपमितसमासः । उत्पश्यामीति सर्वत्र सम्बध्यते । तथापि नास्ति मनोनिर्वृतिरित्याशयेनाह हन्तेति हन्त विषादे । हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोरित्यमरः । हे चण्डि अतिकोपने । चण्डस्त्वत्यन्तकोपन इत्यमरः । गौरादित्वात् ङीष् । उपमानकथनमात्रेण न कोपितव्यमिति भावः । क्वचिदपि कस्मिन्नप्येकस्मिन् वस्तुनि ते तव सादृश्यं नास्त्यतो न निर्वृणोमीत्यर्थः । अनेनास्याः सौन्दर्यमनुपममिति व्यज्यते ॥ ४३ ॥

त्वामालिख्य प्रणयकुपितां धातुरागैः शिलाया
मात्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम् ।
अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरालुप्यते मे
क्रूरस्तस्मिन्नपि न सहते सङ्गमं नौ कृतान्तः ॥४४ ॥

---

सम्प्रति प्रतिकृतिदर्शनमाह

त्वामिति । हे प्रिये प्रणयेन प्रेमातिशयेन कुपितां कुपितावस्थायुक्तां त्वां त्वत्प्रतिकृतिमित्यर्थः । धातवोगैरिकादयः । धातुर्वातादि शब्दादि गैरिकादिष्विति यादवः । ते एव रागा रञ्जकद्रव्याणि तैर्द्धातुरागैः शिलायां शिलापट्टे आलिख्य निर्म्माय आत्मानं मां मत्प्रतिकृतिमित्यर्थः ते तव चित्रगताया इत्यर्थः चरणपतितं कर्त्तुं तथा लेखितुं यावदिच्छामि तावदिच्छासमकालं मुहुरुपचितैः प्रवृद्धै रस्रैरश्रुभिः कर्त्तृभिः मे दृष्टिरालुप्यते आव्रियत इत्यर्थः । ततो दृष्टिप्रतिबन्धनाल्लेखनं प्रतिबध्यत इति भावः । क्रूरो घातुकः । नृशंसो घातुकः क्रूर इत्यमरः । कृतान्तो दैवम् । कृतान्तोयमसिद्धान्त दैवाकुशल कर्मस्वित्यमरः । तस्मिन्नपि चित्रेऽपि नौ आवयोः । युष्मदस्मदोः षष्ठीचतुर्थी द्वितीयास्थयोर्वान्नाविति नावादेशः । सङ्गमं सहवासं न सहते । सङ्गमलेखनमप्यावयोरसहमानं दैवमावयोः सङ्गं न सहत इति किमु वक्तव्यमित्यपि शब्दार्थः ॥ ४४

धारासिक्तस्थलसुरभिणस्त्वन्मुखस्यास्य बाले
दूरीभूतं प्रतनुमपि मां पञ्चबाणः क्षिणोति।
घर्मान्तेऽस्मिन् विगणय कथं वासराणि व्रजेयु-
र्दिक्संसक्तप्रविततघनव्यस्तसूर्यातपानि॥ ०॥
मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतोः
लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेषु।

---

अधुना स्वप्नदर्शनमाह

मामिति। सुप्तस्य विज्ञानं स्वप्नः। स्वप्नः सुप्तस्य विज्ञानमिति विश्वः। सन्दर्शनं सम्वित्। दर्शनं समये शास्त्रे दृष्टौ स्वप्नेऽक्षिणि सम्विदीति शब्दार्णवे। स्वप्नसन्दर्शनानि स्वप्नज्ञानानि चूतवृक्षादिवत्सामान्यविशेषभावेन सहप्रयोगः। तेषु मया कथमपि महता प्रयत्नेन लब्धाया गृहीताया दृष्टाया इति यावत् ते तव निर्दयाश्लेषोगाढ़ालिङ्गनं स एव हेतुस्तस्य निर्दयाश्लेषार्थमित्यर्थः। षष्ठी हेतुप्रयोग इति षष्ठी। आकाशे निर्विषये प्रणिहितभुजं प्रसारितबाहुं मां पश्यन्तीनां स्थलीदेवतानां मुक्तामौक्तिकानीव स्थूलाः अश्रुलेशा वाष्पबिन्दवस्तरुकिशलयेषु। अनेन चेलाञ्चले नाश्रुधारणासमाधिर्ध्वन्यते। बहुशो न पतन्तीति न किन्तु पतन्त्येवेत्यर्थः। निश्चये नञ्द्वयप्रयोगः। तथा चाधिकारसूत्रस्मृतिनिश्चय सिद्धार्थे नञ्द्वयप्रयोगः सिद्ध इति।

पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां
मुक्तास्थूलास्तरुकिसलयेष्वश्रुलेशाः पतन्ति ॥४५॥
भित्त्वा सद्यः किसलयपुटान् देवदारुद्रुमाणां
ये तत्क्षीरस्रुतिसुरभयो दक्षिणेन प्रवृत्ताः ।

---

महात्मगुरुदेवानामश्रुपातः क्षितौ यदि । देशभ्रंशो महादुःखं मरणञ्च भवेत् ध्रुवमिति क्षितौ देवता श्रुपातनिषेधदर्शनाद्यक्षस्य मरणाभावसूचनार्थं तरुकिसलयेषु पतन्तीत्युक्तम् ॥ ४५ ॥

इदानीं तदङ्गस्पृष्टवस्तुस्पर्शनमाह

भित्त्वेति । देवदारुद्रुमाणां किसलयपुटान् पल्लवपुटान् सद्योभित्त्वा तत्क्षीरस्रुतिसुरभयस्तेषां देवदारुद्रुमाणां क्षीरस्रुतिभिः क्षीरनिष्यन्दैः सुरभयः सुगन्धयः तुषाराद्रिजातत्वे लिङ्गमिदं ये वाता दक्षिणेन दक्षिणमार्गेण । तृतीयाभिधाने प्रकृत्यादिभ्य उपसंख्यानात् तृतीयासमेन यातीतिवत् तत्रापि करणत्वस्य प्रतीयमानत्वात् कर्तृकरणयोरेव तृतीयेति भाष्यकारः । प्रवृत्तास्चलिताः हे गुणवति सौशील्य सौकुमार्य्यादि गुणसम्पन्ने ते तुषाराद्रि वाताः पूर्वं प्राक् एभिर्वातैस्तवाङ्गं स्पृष्टं स्यादि किलेति सम्भावितमेतदिति बुद्ध्येत्यर्थः वार्त्तासम्भावयोः किलेत्यमरः । मया आलिङ्ग्यन्ते आश्लिष्यन्ते । वायूनां सूक्ष्मत्वेष्यमूर्त्तत्वेनालिङ्गनायोगादालिङ्गयन्त

आलिङ्गन्ते गुणवति मया ते तुषाराद्रिवाताः
पूर्व्वस्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ ४६ ॥
संक्षिप्येत क्षण इव कथं दीर्घयामा त्रियामा
सर्व्वावस्थास्वहरपि कथं मन्दमन्दातपं स्यात् ।
इत्थं चेतश्चटुलनयने दुर्लभप्रार्थणं मे
गाढ़ोष्माभिः कृतमशरणं त्वद्वियोगव्यथाभिः ॥ ४७॥

---

इत्यभिधानं यक्षस्योन्मत्तत्वात् प्रलपितमित्यदोष इति वदन्निकल्लकारः स्वयमेवोन्मत्तप्रलापीवुरपेक्षणीयः ॥ ४६ ॥

संक्षिप्येतेति । दीर्घा यामाः प्रहरा यस्यां सा दीर्घयामा विरहवेदनया तथा प्रतीयमानेत्यर्थः । त्रियामा रात्रिः । आद्यन्तयोरर्द्धयामयोर्दिनव्यवहारात् त्रियामेति क्षीरस्वामी । क्षण इव कथं केन प्रकारेण संक्षिप्येत लघूक्रियेत अहरपि सर्व्वावस्थासु सर्व्वकालेष्वित्यर्थः । मन्दमन्दो मन्दप्रकारः । प्रकारे गुणवचनस्येति द्विरुक्तिः । कर्म्मधारयवदुत्तरेष्विति कर्म्मधारयवद्भावात्सुपोलुक् । मन्दमन्दातपमत्यल्पसन्तापं कथं स्यात् । हे चटुलनयने चञ्चलाक्षि इत्थम् अनेन प्रकारेण दुर्लभप्रार्थनमप्राप्यमनोरथं मे मम चेतो गाढ़ोष्माभिरतितीव्राभिः त्वद्वियोगव्यथाभिरशरणमनाथं कृतम् ॥ ४७ ॥

नन्वात्मानं बहु विगणयन्नात्मनैवावलम्बे
तत्कल्याणि त्वमपि नितरां मागमः कातरत्वम् ।
कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ ४८ ॥

---

न च मदीयदुर्दशाश्रवणाद्भेतव्यमित्याह

नन्विति । नन्वित्यामन्त्रणे । प्रश्नावधारणानुज्ञानुनयामन्त्रणे नन्वित्यमरः । ननु प्रिये बहु विगणयन् शापान्ते सत्येवमेवं करिष्यामीत्यावर्त्तयन् आत्मानमात्मनैव स्वेनैव । प्रकृत्यादिभ्य उपसंख्यानमिति तृतीया । अवलम्बे धारयामि यथाकथञ्चिज्जीवामीत्यर्थः । तत्तस्मात्कारणात् हे कल्याणि सुभगे त्वत्सौभाग्येनैव जीवामीति भावः । बह्वादिभ्यश्चेति ङीष् । त्वमपि नितरामत्यन्तं कातरत्वं भीरुत्वं मागमः मा गच्छ । न माङ्योग इत्यडागमाभावः । तादृक्सुखिनोरावयोरीदृशि दुःखे कथं न बिभेमित्याशङ्क्याह कस्येति । कस्य जनस्यात्यन्तं नियतं सुखम् उपनतं प्राप्तम् एकान्ततो नियमेन दुःखं वा उपनतं किन्तु दशा अवस्था चक्रस्य रथाङ्गस्य नेमिस्तदन्तः । चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्री स्यात्प्रधिः पुमानित्यमरः । तस्याः क्रमेण परिपाट्या । क्रमः शक्तौ परीपाट्यामिति विश्वः । नीचै

शापान्तो मे भुजगशयनादुत्थिते शार्ङ्गपाणौ
मासानन्यान् गमय चतुरो लोचने मीलयित्वा ।
पश्चादावां विरहगुणितं तं तमात्माभिलाषं
निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥ ४९ ॥

---

रधः उपरि च गच्छति प्रवर्त्तते । एवं जन्तोः सुख दुःखे पर्य्यावर्त्तते इत्यर्थः ॥ ४८ ॥

नच निरवधिकमेतद्दुःखमित्याह

शापान्त इति । पाणौ शार्ङ्गं यस्य स तस्मिन् शार्ङ्गपाणौ । सप्तमी विशेषण इत्यादिना बहुव्रीहिः । प्रहरणार्थेभ्यः परे निष्ठासप्तम्यौ भवत इति वक्तव्यात् पाणिशब्दस्योत्तरनिपातः । भुजगः शेषएव शयनं तस्मादुत्थिते सति मे शापन्तः शापावसानम् । अन्यान् अवशिष्टान् चतुरोमासान् मेघदर्शनप्रभृति हरिबोधनदिनान्तमित्यर्थः । दशदिवसाधिक्यन्त्वत्र न विवक्षितमितुरक्तमेव । लोचने मीलयित्वा निमील्य गमय धैर्य्येणातिवाहयेत्यर्थः । पश्चादनन्तरं त्वञ्च अहञ्च आवाम् । त्यादादीनि सर्वैर्नित्यमित्येकशेषः । त्यदादीनां मिथोद्वन्द्वे यत्परं तच्छिष्यत इति अस्मदः शेषः । विरहे गुणितमेवं करिष्यामीति मनसावर्त्तितं तं तं वीप्सायां द्विरुक्तिः । आत्मनोरावयोरभिलाषं मनोरथं परिणताः शरच्चन्द्रिकाः यासां तासु क्षपासु रात्रिषु

भूयश्चाह त्वमपि शयने कण्ठलग्ना पुरा मे
निद्रां गत्वा किमपि रुदती सस्वनं विप्रबुद्धा।
सान्तर्हासं कथितमसकृत् पृच्छतश्च त्वया मे
दृष्टः स्वप्ने कितव रमयन् कामपि त्वं मयेति ॥५०॥

---

निर्वेच्यावः भोच्यावहे। विशतेर्लृट्। निर्वेशो भृतिभोगयोरित्यमरः॥ ४९ ॥

सम्प्रति तस्या मेघवञ्चकत्वशङ्कानिरासायाति गूढमभिधेयमुपदिशति

भूय इति। हे अबले भूयः पुनरप्याह त्वद्भर्त्ता मन्मुखेनेति शेषः मेघवचनमेतत्। किमित्यत आह। पुरा पूर्वं पुराशब्दश्चिरातीते। स्यात्प्रबन्धे चिरातीते निकटागामिके पुरेत्यमरः। शयने मे कण्ठलग्नापि त्वम्। गले बद्धस्य कथमपि गमनं न सम्भवेदितिभावः। निद्रां गत्वा किमपि केन वा निमित्तेनेत्यर्थः। सस्वनं सशब्दं रुदती सती विप्रबुद्धा आसीरिति शेषः। असकृत् बहुशः पृच्छतोरोदनहेतुमिति शेषः। मे मम कितव त्वं कामपि रमयन्मया स्वप्ने दृष्टइति त्वया सान्तर्हासं यथातथा कथितञ्च इति त्वद्भर्त्ताभूयश्चाहेति योजना॥ ५० ॥

एतस्मादिति। एतस्मात् पूर्वोक्तात् अभिज्ञायते ऽनेनेत्यभिज्ञानं लक्षणं तस्य दानात्प्रापणात् मां कुश

एतस्मान्मां कुशलिनमभिज्ञानदानाद्विदित्वा
मा कौलीनाच्चकितनयने मय्यविश्वासिनी भूः ।
स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगा-
दिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति ॥ ५१ ॥

---

लिनं क्षेमवन्तं विदित्वा ज्ञात्वा हे चकितनयने कुले भवात् कौलीनाल्लोकप्रवादात् एतावता कालेन परासुर्नोचेदागच्छतीति जनप्रवादादित्यर्थः । मयिविषये अविश्वासिनी मरणशङ्किनी माभूः न भव । भवतेर्लुङ् न माङ्योग इत्यडागमप्रतिषेधः । नच दीर्घकालविप्रकर्षात् पूर्वस्नेहनिवृत्तिः शङ्क्येत्याह स्नेहानिति । किमपि किञ्चित् निमित्तं न विद्यत इति शेषः । स्नेहान् प्रीतीः विरहे सत्यन्योन्यविप्रकर्षे सति ध्वंसिनो विनश्वरानाहुः तत्तथा न भवतीत्यभिप्रायः । किन्तु ते स्नेहा अभोगात् विरहे भोगाभावाद्धेतोः । प्रसज्यप्रतिषेधेपि नञ्समासः । इष्टे वस्तुनि विषये उपचितो रसः स्वादो येषु ते उपचितरसाः सन्तः प्रवृद्धतृष्णा इत्यर्थः । रसो गन्धे रसः स्वादे तिक्तादौ विषरागयोरिति विश्वः । प्रेमराशी भवन्ति वियोगासहिष्णुत्वमापद्यन्त इत्यर्थः । स्नेहप्रेम्णोरवस्थाभेदाद्भेदः । तदुक्तम् । आलोकनाभिलाषौ रागस्नेहौ ततः प्रेमा । रतिशृङ्गारौ योगे वियोगतोविप्रलम्भश्चेति । तदेव स्फुटीकृतं रसाकरे । प्रेक्षा दिदृ

आश्वास्यैवं प्रथमविरहोदग्रशोकां सखीं ते
शैलादाशु त्रिनयनवृषोत्खातकूटान्निवृत्तः ।
साभिज्ञानप्रहितकुशलैस्तद्वचोभिर्ममापि
प्रातःकुन्दप्रसवशिथिलं जीवितं धारयेथाः ॥ ५२ ॥

---

च्चा रम्येषु तच्चिन्ता त्वभिलाषकः । रागस्तत्सङ्गबुद्धिः स्यात् स्नेहस्तत्प्रवणक्रिया । तद्वियोगासहं प्रेम रतिस्तत्सहवर्त्तनम् शृङ्गारस्तत्समं क्रीडा संयोगः सप्तधा क्रमादिति ॥ ५१ ॥

इत्थं स्वकुशलं सन्दिश्य तत् कुशलसन्देशानयनमिदानीं याचते

आश्वास्येति । प्रथमविरहेणोदग्रशोकां तीव्रदुःखां ते सखीमेवं पूर्व्वोक्तरीत्या आश्वास्य प्रबोध्य त्रिनयनस्य त्र्यम्बकस्य वृषेण वृषभेणोत्खाता अवदारिताः कूटाः शिखराणि यस्य तस्मात् । कूटोऽस्त्री शिखरं शृङ्गमित्यमरः । शैलात् कैलासात् आशु निवृत्तः सन् साभिज्ञानं सलक्षणं यथातथा प्रहितं प्रेषितं कुशलं येषु तैस्तस्यास्त्वत्सख्या वचोभिर्ममापि प्रातःकुन्दप्रसवमिव शिथिलं दुर्बलं जीवितं धारयेथाः स्थापय । प्रार्थनायां लिङ् ॥ ५२ ॥

सम्प्रति मेघस्य प्रार्थनाङ्गीकारं प्रश्नपूर्व्वकं पृच्छति कच्चिदिति । हे सौम्य साधो इदं मे बन्धुकृत्यं बन्धुकार्य्यम् । देवदत्तस्य गुरुकुलमितिवत्प्रयोगः ।

कच्चित्सौम्य व्यवसितमिदं बन्धुकृत्यं त्वया मे
प्रत्यादेशान्नखलु भवतोधीरतां कल्पयामि ।
निःशब्दोऽपि प्रदिशसि जलं याचितश्चातकेभ्यः
प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ ५३ ॥

---

व्यवसितं कच्चित् करिष्यामीति निश्चितं किम् । कच्चित् कामप्रवेदन इत्यमरः । अभिप्रायज्ञापनं कामप्रवेदनम् । नच ते तूष्णीम्भावादनङ्गीकारं शङ्के यतस्ते स एवोचित इत्याह प्रत्यादेशात् करिष्यामीति प्रतिवचनात् । उक्तिराभाषणं वाक्यमादेशो वचनं वच इति शब्दार्णवे । भवतस्तव धीरतां गम्भीरत्वं न कल्पयामि न समर्थये खलु । तर्हि कथमङ्गीकारज्ञानं तत्राह याचितः सन् निःशब्दोपि निर्गर्ज्जितोऽपि अप्रतिजानानोपीत्यन्यत्र चातकेभ्यो जलं प्रदिशसि ददासि । युक्तञ्चैतदित्याह हि यस्मात् सतां सत्पुरुषाणां प्रणयिषु याचकेषु विषये ईप्सितार्थक्रियैवापेक्षितार्थसम्पादनमेव प्रत्युक्तं प्रतिवचनं क्रिया केवलमुत्तरमित्यर्थः । नीचोवदति न कुरुते न वदति सज्जनः करोत्यवेति भावः ॥ ५३ ॥

अत्र मल्लिनाथसम्मतः प्रत्यादेशादिति पाठस्तद्व्याख्यानञ्च न समीचीनतया सङ्गच्छते । तस्मादस्माभिः "प्रत्याख्यातुमिति पाठः प्रत्याख्यातुं न करिष्यामीति प्रतिवक्तुं भवतो धीरतां तूष्णीम्भावं न कल्प

एतत् कृत्वा प्रियमनुचितप्रार्थनावर्त्तिनो मे
सौहार्दाद्वा विधुर इति वा मय्यनुक्रोशबुद्ध्या।
इष्टान् देशान् जलद विचर प्रावृषा सम्भृतश्री
र्माभूदेवं क्षणमपि च ते विद्युता विप्रयोगः॥ ५४॥

---

यामि न समर्थये खलु तवायं तूष्णीम्भावो न प्रत्याख्यान सूचक इत्यर्थः" इति व्याख्यानञ्च समधिक हृद्यतयानुमन्यते।

सम्प्रति स्वापराधसमाधानपूर्व्वकं स्वकार्य्यस्यावश्यकरणं प्रार्थयमानो मेघं विसृजति

एतदिति। हे जलद सौहार्द्दात्सुहृद्भावात् वा। हृद्भगसिन्ध्वन्ते पूर्व्वपदस्य चेत्युभयपदवृद्धिः। विधुरो वियुक्तइति हेतोः। विधुरन्तु विश्लेष इत्यमरः। मयि विषये अनुक्रोशबुद्ध्या करुणाबुद्ध्या वा अनुचिता तव अननुरूपा या प्रार्थना प्रियां प्रति सन्देशं मे हरेत्येवंरूपा तत्र वर्त्तिनः निर्बन्धपरस्य मे मम एतत् सन्देशहरणरूपं प्रियं कृत्वा सम्पाद्य प्रावृषावर्षाभिः सम्भृतश्रीरुपचितशोभः सन् इष्टान् स्वाभिलषितान् देशान् विचर यथेष्टदेशेषु विहरेत्यर्थः। देशकालाध्व गन्तव्याः कर्म्मसंज्ञाह्यकर्म्मणामिति वचनात् सकर्म्मकत्वम्। एवं क्षणमपि ते तव विद्युता कलत्रेणेति शेषः विप्रयोगो विरहो माभून्मास्तु। माङित्याशिषि लुङ्। अन्ते काव्यस्य नित्यत्वात् कुर्य्यादाशिषमुत्त

तत्सन्देशं जलधरवरो दिव्यवाचाचचक्षे
प्राणांस्तस्या जलहितरतो रक्षितुं यक्षबध्वाः ।
प्राप्योदन्तं प्रमुदितमनाः सापि तस्थौ स्वभर्त्तुः
केषां न स्यादवितथफला प्रार्थनाह्युन्नतेषु ॥ ० ॥
श्रुत्वा वार्त्तां जलदकथितां तां धनेशोऽपि सद्यः
शापस्यान्तं सदयहृदयः संविधायास्तकोपः ।
संयोज्यैतौ विगलितशुचौ दम्पती हृष्टचित्तौ
भोगानिष्टानभिरतसुखं भोजयामास शश्वत् ॥ ० ॥

इति श्रीमहाकवि कालिदासकृतं मेघदूतं

समाप्तम् ।

---

साम् । सर्व्वत्र व्याप्यते विद्वान् नायकेच्छानुरूपिणी मिति सारस्वतालङ्कारे दर्शनात् काव्यान्तेनायकेच्छानुरूपोऽयमाशीर्व्वादः प्रयुक्त इत्यनुसन्धेयमिति ॥ ५४ ॥

इति श्रीमहोपाध्यायकोलाचलमल्लिनाथसूरिविरचितायां मेघसन्देशव्याख्यायां सञ्जीवन्यामुत्तरमेघः समाप्तः ।

—ः०ः—

# विज्ञापनम् ।

